The seventh and last Canto of 23 verses opens with an account of Suryaraj of Shringarapur a Kṣatriya family ruling there since olden times The Suryarao was helped by another family called Shirkas who employed as their family priest a Brahman named Keshav Bhat Upadhye He was introduced to Raghunath Pandit one of Shivaji s ministers Therefore Shivaji conquered both the Surves and the Shirkes and forced them into his service In due course Raghunath Pandit and Shivaji died and King Shambhu began to rule the country Shambhu appointed Keshav Bhat to the post of Panditarai a position which enabled him to give large charities to many Brahmans and set right abuses that had crept into religious practices

---

## SECTION V

### Shambhuji s Sacrifice to Kali

**Cantos 1 5**

Canto 1 of 77 verses begins with Shambhuji giving instructions to make preparations for performing a sacrifice in consonance with the advice tendered by Śivayogi The King employed competent agents for the vari ous tasks such as the fetching of holy waters from different places and inviting learned and expert representatives versed in the subject Thus in due course a large concourse of priests workers and mechanics gathered at Shringarapur and they were all respectfully received by the King He re quested them all to attend to every detail with scrupulous care and leave no chance for any error or omission to creep in All the assembled men work ed zealously and carried out the King s behests in minute detail Every care was taken to propitiate the Goddess Kali The priests assured Shambhuji that his highest wish would now be fulfilled Buildings were erected festoons and decorations were made in profusion Flowers and trees were properly set in order The King sent special messengers to invite chiefs and princes from foreign parts to grace the occasion Traders merchants musicians dancing girls and professionals of every description gathered to witness the ceremony

The second Canto containing 87 verses describes the several stages of the main sacrifice *viz* the King s taking the vow after an auspicious bath then his selection of the chief officiating priest and preparations for a grand dinner Deities were assigned for propitiating the nine planets and the various

form of cash, lands, horses, elephants, jewels, vehicles, clothes, rings, corn and maid servants Thus, Shambhuji's fame spread far and wide. He then had the final bath, put on his lustrous dress and dismissed the grand assemblage.

The fifth and last Canto of 84 verses describes the pregnancy of Shambhuji's queen Rājasā developing from month to month. The husband was highly gratified at this result and satisfied the peculiar cravings natural to an expectant mother He also prepared a suitable place for her confinement with all the necessary conveniences. He got ready expert physicians and competent nurses for rendering comfort to her when she would be a mother On an auspicious day she gave birth to a highly gifted son.

---

# परमानन्दकाव्यम्

## Section I

AN ACCOUNT OF THE BHONSALE FAMILY FROM SHAHAJI TO THE FLIGHT OF AKABAR TO PERSIA.

यद्यप्यन्यस्तनूजस्तरणिकुलमणेर्रशभूपायुतोभूद्
गोप्ता सौभाग्यशाली प्रबलबल्युतो विज्वरो वैरिशै[श]ल्य ।
एतन्मध्ये तथापि प्रमथगविपतेः प्रेमपात्र पवित्र
पुण्याश पुण्यशील समजनि रजनीनायक शाह एव ॥* ४

गौरीसर्वस्वभूतः सफलनृपशिरोधार्यमान्यैकमुद्रो
भक्त्याविर्भूतरुद्र परदळदलनो बद्धि[द्धि]सीमासमुद्रः ।
सत्कर्मी राजधर्मी स्थितिधृतिगतिभिर्ज्ञातधर्मावतारः
सार सर्वसहायाः समभवदतुलः साहसी शाहभूपः ॥ ५

यस्यानेकमहीमहेन्द्रसमरे मत्तेभकुम्भस्थले
विद्युद्भ्रान्तिकरी बभूव निभृता खड्गभ्रमिर्भास्वरा ।
आश्चर्य तु महत्त्वमङ्गलपरासृक्सङ्घलिता सती
जाता मङ्गलरूपिणी किल गले मालामला मौक्तिकी ॥ ६

कम्पन्ते चिकिरीयाः शरणमनुसृता मैसुरीयास्तुरीया·
कारुण्यासेकमात्रप्रमुदितहृदया रायलीयास्तुरीया· ।
चञ्जीचञ्जापुरीया मधुरमणितिभिर्माथुरा नोद्धुरा स्युः
शङ्कन्ते सेतुसस्याः समरविजयिनः शाहजीकासत्रसङ्गम् ॥ ७

कि ब्रूमश्चास्य भाग्य नियतिकृतिवशाद् दाग्वजीरत्नयुक्तो
युक्तिप्रत्युक्तिरीत्या स्वयमिव सकले राजकार्ये धुरीणः ।
निःशङ्क खड्गधाराग्रहणगरिमणि प्रोज्ज्वलच्चैनिकाख्या
दिक्पालाः पातशाहा अपि समरविधौ यद्भुज प्रार्थयन्ति ॥ ८

पुत्रैः पौत्रैर्नरैरनुसृतपरमप्रेयसीभि प्रवीणै
क्रीडाभिः शोभिनीभिः प्रतिपदमनघद्वासरान्सौख्यसारान् ।
चञ्चच्छ्रीचन्द्रमौलेश्चरणकमलयोर्मोदमग्नः सुलग्नो
यश्चित्त चञ्चरीकश्चलनयनयोर्नो निधि स्वीचकार ॥ ९

* The first three stanzas are missing

ब्रह्मण्यस्त्वद्वितीय प्रकृतिमुपगत शास्त्रसंस्कारशीला
ब्रह्मण्येऽप्यद्वितीये सुजनसरणिभिः पारमायात एव ।
तस्मादुक्पाण्डवेयप्रमुखनृपवरैश्चोपमेयोऽप्रमेयो
यातः श्रीरामजायाजनकतदतुरं पुण्यभार जगत्याम् ॥ १०

उद्धृष्टाः समरे भटाः करिघटा प्रस्ताः कविभ्यः स्फुटाः
प्रोत्कृष्टाः किल कल्पपादपगुणा स्पष्टाः स्वय स्वीकृताः ।
सन्तुष्टैस्तरुणीजनैर्निवसता सङ्गीतशालान्तरे
सृष्टाः कामकलानिधे रसकला श्लिष्टाः प्रनष्टा अपि ॥ ११

गन्धर्वा इव गायकाः परिचराः प्रेष्या प्रवीणा इव
माल्या क्षत्रधुरन्धरा इव धराधीशा इव प्रीतिदाः ।
सत्य सत्यसमाश्रयाः कविगणाः ससारिणः सारिणः
सर्वे शाहमहीपतेः सुरसुहृत्साम्राज्यसाम्ये बभुः ॥ १२

सर्वे सत्यपरायणाः सुकृतिन शुद्धीकृताः शासनाद्
ब्रह्मद्वेषसुरामदप्रकरणजा वार्ता पुन स्यात् कथम् ।
किं वाच्य चरित तु शाहनृपतेश्चित्र विचित्र स्फुट
चक्र चौर्यकुलस्य येन सकल काशीजले मज्जनम् ॥ १३

गेह गेहमहो नु धान्यसदृशो राशिर्धनस्याभव-
च्चातुर्वर्ण्यमनङ्गवैरिनिरत सम्यक् स्वधर्मे स्थिरम् ।
इत्थ शाहनृपेऽनुशासति महीं माहात्म्यमन्यादृश
दृष्टु चारु वसुन्धरेति च पद पृथ्व्या अभूत् सार्थकम् ॥ १४

आवाल्यात् बलवद्विरोधवलनात्स्वीय पद प्रोज्झित
तत्रापि प्रकटप्रतापधरणात्साराज्यता नोज्झिता ।
य देश समुपाश्रित प्रबलधीः श्रीशाहभूमिपति
लोकैरेवमलोकि पूर्ववदसौ तद्देश एव प्रभुः ॥ १४

यच्च कार्यमुरीकरोति बहुधा वायुप्रवृद्धे पथि
प्रीत्या तत्परिपूरयत्यतितरा भक्त्या भवानीपतिः ।
राजानो बहुशो बभूवुरपरे प्राग्दाक्षिणात्याः पर
श्रीमच्छाहनृपस्य केवलमहाराजाभिधा पप्रथे ॥ १५

एकः व्याकरणं विना प्रविदितो नो धातुवादः क्वचित्
प्रावृट्कालमृते व्यलोकि न पुनर्मालिन्यमेवाम्बरे ।
आश्चर्यं विदमेव शाहमनसा सच्छास्त्रसंसेवने
सम्प्राप्तं तु मनुत्वमेव हि कथं नाणुत्वमात्रं जहौ ॥ १६

वारं वारमहो नु वर्ण्यमतुलं किं तद्यशो निर्मलं
पारावारपरम्परोपरिसरेष्वाजन्मतः प्रस्थितम् ।
दृष्टे शाहमहीपतौ मतिमतामित्थं मतिः प्राभवद्
धात्रैकत्रभरीकृतः स्वभरितः सर्वो गुणानां गणः ॥ १७

तद्राज्ञो रजनीकरस्य ललिते ज्योत्स्नेव शोभावहे
द्वे भार्ये सुबभूवतुः शुभगुणे शोणाधरे शोभने ।
तत्राद्याऽभवदादरायदुकुलोत्तसा जिजाम्बाभिधा
त्वन्या तन्महितान्वयायमहिता ख्याता तुकाम्बा तथा ॥ १८

धुर्यास्ता अपराः समाहृतगुणाः सङ्गीतसन्नामकाः
नार्योऽनार्यगुणोज्झिता बहुतरा आसन् पराः प्रेयसि ।
तासां सन्ततिसन्ततिः समुदभूच्छोभाधरा सद्गुणा
सर्वाः शाहमहीपतिं सुचरितैरानन्दयाञ्चक्रिरे ॥ १९

ज्येष्ठा श्रेष्ठगुणैर्युता सुरसरित्साधारणी धोरणी
नाम्ना यत्र कनिष्ठतानुलसती निष्ठा कनिष्ठा क्वचित् ।
मुख्ये श्रीजनमण्डने नरपते राज्ञ्यावुभे निर्वृते
मुख्यापेक्षतया ययोरनितरामाज्ञा नरीनृत्यति ॥ २०

शम्भोः सारकथानुसारवशतः शम्भौ परं सद्गुणं
श्रीशम्भोश्चरणारविन्दनिरतं राजन्यधर्मोद्धुरम् ।
सा काले समजीजनद्गिरिसुता पुत्रं कुमारं यथा
धाम्नैवामलितं शिवस्य परमप्रेष्ठ्यं शिवाख्यं सुतम् ॥ २१

एकं पुत्रमसूत तुष्टमनसा तूर्णं तुकाम्बा ततो
जुष्टं देवगुणैरनन्तविभवैर्भूजानिभारक्षमे ।
राज्ञा राज्यविधौ तथापि बहुशो भाव्यः सुसम्भावितः
श्रामच्छ्रीशिव एक एव हि कुलोद्धारीभवन् सम्भवौ ॥ २२

सामन्तप्रमुखा सचन्द्रदलवीमुख्यादयो दुर्मुखा
दुर्दान्तास्तरसा धृता सहगृहाः कारागृहे स्थापिता ।
युद्धप्रारम्भणैः कृता यमपुरप्रास्थानिका केचन
भ्रष्टा केचिदवि[ब]भ्रमन्त्वभिमराद्धामे मरादूसङ्घवत् ॥ ३०

युद्ध शुद्धमधारि पट्दशसमाः प्रत्ता वरिष्ठा नगा
गत्वा दर्शनमाचचार सहसा दिल्लीश्वरस्याप्यहो ।
स्वीय राज्यमथो बभार सहसा स्वल्पैरहोभिः स्वय
चित्र चारुतर शिवस्य चरित को वाऽनुगन्तु क्षम ॥ ३१

नानादेशनिदेशधर्मनिपुणाश्छत्राधिनाथैरल
मान्या नामिकजस्य यस्य वितता नामावली पप्रथे ।
आश्चर्य सुमहत्प्रतापनिकरैर्जाज्वल्यमानोऽपि सन्
जात· श्रीशिवभूपतेश्च विषये दिल्लीश्वरोऽनीश्वर ॥ ३२

शलिप्सो कुतुपाभिधस्य विलसत्कौटिल्यवारानिधे
र्निस्मृत्याखिलराजनीतिरचना गत्वा ददौ दर्शनम् ।
श्रीमच्छ्रीशिवविक्रमार्कविहिता विश्वोपकारक्षमा
क्ष्मानाथ समनुक्रमेण सकला चर्या चरीचक्रमे ॥ ३४

प्राणा एव बहिश्चरा खलु सुरत्राणस्य ये सम्मता
ये ख्यातास्तु समस्तदेशविषये खाना खुरासानजा ।
ते खड्गेन शिवेन सम्भ्रमवशात्खण्डीकृता लुण्ठिता-
स्तेषामेव हि दण्डनेन शमते भूमण्डलाखण्डल ॥ ३४

येन त्वेकनिशि प्रसह्य सबलाप्यौरङ्गजेबस्य सा
सेना रावणसन्निभस्य भरिता युद्धाब्धिसन्तारिणी ।
स्नेनैवाशु घटीचतुष्टयमिव न्यक्कर्णवारीकृता
नौकेवोग्रभटैरदभ्रकपटैरान्दोलना दोलिता ॥ ३५

गर्वश्चेदिल्लभूपतेर्भृतिभरो वजीरवर्गस्य तु
त्रासो हिन्दुगणस्य द्रुद्रत उतोत्कर्षोऽसितास्यात्मनाम् ।
शल्य श्रीतुलजाम्बिकाहृदयत सद्यो[क्षो]भ्यमाणे शिवे
निश्छिद्रच्छालनत पतत्पयजले किं किं भ्रमान्नापतत् ॥ ३६

विष्णुर्भ्लालनिपातित॰ क्षितिभृता पट्टा कपाले हतो
घट्टाटोपभरात्तथापि तरसा पल्लङ्किकामग्रहीत् ।
पश्चात्केशभरैरकृन्ति च शिर॰ क्व नु सुरा अनुरन्
कालस्याप्यफजल्लखानकल्ने कालो न सल्क्ष्यते ॥ ३७

पूर्वं मासचतुष्टयाद् हृदि जनास्ता दुर्दशा भेजिरे
किं भाव्य ह्यफजल्लखाननृपतेर्जाते मिलापे शिवे ।
द्विवैरेव शिवप्रसादभरितैर्दृष्ट क्षणैरद्भुत
विश्वव्यापि यश शिवस्य समभूद्विश्वैकभोग्योऽसुर॰ ॥ ३८

सम्पातादफजल्लखस्य तुलजासस्थानशालान्तरे
सन्तोषादुदभूदल चिलिचिलिगशब्दो महानद्भुत ।
तालोत्तालविमिश्रणाच्छिवनृपस्याश्चर्यसञ्जातना-
त्सञ्जात करतालिकारवरव श्रीकालिकाया पुर ॥ ३९

कालुष्यन्तु बले समागतमथो मोहस्य मोहान्धता
मालिन्यस्य विकासता प्रतिहता क्रोधस्य लोभस्य च ।
तृष्णाख्या लता विमर्दिततनुस्तत्राभवत्तत्क्षणात्
पापोप्यप्रतिभ शिवक्षितिभृता पापेऽफजल्ले हते ॥ ४०

सङ्क्रान्त किल कालसन्निभभटैरत्युद्भटैरत्कट
प्रध्वस्त बलमस्फुटस्फुटतर सङ्काल्यमान क्रुधा ।
विश्रान्तस्पृगखर्वशर्ममहिमासर्वेरवसस्थापक
सर्व रुधरनैर्यलोकि यमवत्तज्जावलीभाननम् ॥ ४१

देवा प्रापुरल हवींषि सुखिनो गोब्राह्मणा स्युर्मुदा
शेषस्यापि शिरस्यधूरभिहता भूमण्डल निर्मलम् ।
त्रैलोक्यस्थितिसञ्चरत्सुकृतिसम्मल्ला त्वदीय तदा
मान्य मानदवस्य नोऽभवदिद वीराग्रगण्य रणम् ॥ ४२

चञ्चच्च[विष्णुदेव ?] सतृष्ण एव नितरामासीत्पुरा प्रेमन
शम्भुस्नेहपराङ्मुखोऽप्यतितरा मूढो वरीवर्तते ।
तद्वद् दुष्टदिल्लीश्वरोऽपि निवसन् लग्नोऽस्ति युद्धोद्यमे
नो जानाति यथैव कालयवन काल शिर स्थ स्वकम् ॥ ४३

सर्वेऽपि प्रतिपन्थिन प्रसरिता अन्तर्बहि स्था जना
जानीते जनतागतो जनपद का नो गतिर्भाविनी ।
प्रत्यूहप्रतियातिवातिशुभदा शम्भौ नृपे सर्वदा
शम्भुस्नेहपरम्परैव नितरा वर्वर्ति सर्वोपरि ॥ ४४

चञ्चच्चन्द्रकपालकुण्डलधरो वेतालतालोत्करै
स्तालोच्चैस्तिरयस्तरन्नतितरा तारण्यलीला वहन् ।
नृत्य नृत्तविशारदोऽप्यभिनयन्शुद्राञ्जलीर्मण्डली
र्मन्द मण्डयति स्म मण्डलमथो देवो मृडानीपति ॥ ४५

शाम्यच्छ्रीतुलजाशिरोऽन्यफजलोत्साही विदेहीभवन्
विश्वव्यापितभक्तवत्सल इति प्रोद्यत्प्रवाही पुन ।
विश्वस्योद्धरण कृत कृतमिति प्रेम्णा सुरास्त्वब्रुवन्
श्रीमद्भ्राशिववशसङ्कटहरो हृष्य हरो नृत्यति ॥ ४६

हर्षोत्फुल्लविलोचनो निजजनोत्कर्ष सतर्ष वहन्
शार्वे चन्द्रकलाम्बुनिर्झरझरीधारानुकारानयन् ।
धारावाहिकया कयापि कलया लोकान्समुद्धारयन्
श्रीमच्छ्रीशिववशवैभवविधौ मन्यो भवोऽभूत्क्षणात् ॥ ४७

एतस्मिन्समये निरस्तकुहका प्रेङ्खत्प्रतापोत्कटा
प्रेक्ष्यन्ते परित पुरस्तत इत प्रोद्यत्प्रतापोज्झिता ।
भेरीभाङ्कृतिसम्भ्रमेण भरिता श्यामायमाने वने
खड्गा खड्गिवरामिलन्ति सुभटा कण्ठीरवोद्यत्स्वना ॥ ४८

राजानो बहवो धृता खलु .

बन्ध सुसिद्ध एव। अङ्कुरितवैरिभावान्त करणतया शम्भुसज्ञ प्रविष्टस्य पुरोहितसूनो किञ्चिद्वक्रिमभावो विभाव्यते पितु पुत्रस्य च। स्वस्य वासनानुबन्धानुबद्धसम्बन्धा अपि त्रय स्त्रिगुणात्मिका शरीरसम्पद प्रापुरेष सूचनामात्रप्रदर्शन विहितमत्र ग्रन्थगौरवभयाद्विस्तरेणाऽलम्।

श्रीशम्भोश्चरणानुसेवनरतौ तौ दम्पती सर्वदा
तत्तत्काल उपागतान्बहुविधान्सम्पूजयन्तौ सुरान् ।
प्रेमोद्रेकमुपेयुषोरनुदिन स्वल्पैरहोभिस्तयो
शम्भु प्रादुरभूत्सुत शुभतर स्वामी कुमारप्रभ ॥ ५१

रा्य वृद्धिमुपागत बहुतर शौर्य शिवेनार्जित
कीर्तिर्दिक्षु दशस्वपि प्रसरिता प्रत्यक्षभूचन्द्रिका ।
शम्भोरद्भुतविक्रमस्य विशद श्रीविक्रमार्कानुग
विज्ञात सकलैर्जनैस्तु जनुषो माहात्म्यमन्यादृशम् ॥ ९२

राज्ञ शम्भुगुणान्विता बहुतरा स्युर्मामकीना सुता
इत्येव प्रतिवासर दृढतरा दुर्वासना सन्दधे ।
शम्भोस्तत्तपस प्रभाववशत शम्भु कृपैवानु किं
राजाराममिति प्रिय द्रुततर पुत्र द्वितीय ददौ ॥ ९३

शर्मिष्ठेव गरिष्ठगौरवभरा निष्ठावती सर्वदा
पत्यु पादसरोजसेवनसमारम्भैकनिष्ठा सती ।
जाता श्रीमहिताम्वयेऽतिमहिता श्रीसोयराम्बा परा
राजारामसुतेन सम्भ्रमवती लोकैरलौकि स्फुटम् ॥ ९४

विष्वग्विदृ[द्रु]मसम्भवा व्रतविका विस्तारभाव गता
व्याप्नोत्येव हि विस्तृत विभुतर सिन्धु यथा सर्वत: ।
श्रीशम्भोरतिमानुषा गुणगणा लीनास्तदङ्केऽप्यहो
त सम्बन्धिन एव दु खनिचयैर्नानाविधैराव‍ृणोत् ॥ ९५

तथापि राजा रमणीयरीतिं
कनिष्ठभावैर्भरितो जहौ किम् ।
ज्येष्ठे सुते शम्भुनरेन्द्रसङ्गिके
सन्ध्याविहीनस्तु[न तु] शिवार्चन यथा ॥ ९६

शिवस्य शम्भोरनुरागिणोरल
दिनेषु गच्छत्सु तयोरतिस्फुरम् ।
प्राचीनसस्कारविशेष आदौ
विरुद्धतामङ्कुरयाञ्चकार ॥ ९७

शम्भो शिवारा धनतत्परस्य
प्रसादचिन्हीकृतकन्धरस्य ।
सापत्न्यभावो वस्तान्यथा तथा
भवस्य भावो बलवत्तरोऽभूत् ॥ ९८

सैन्य न सङ्गे न धन प्रसङ्गे
मनोनुषङ्ग किल युद्धरङ्गे ।
एव प्रसक्तेऽपि च दु प्रसङ्गे
राज्यैकसङ्गे शिवभक्तिरङ्गे ॥ ५९

हेला कदर्थीकृतसिन्धुवेला
लीला कनिष्ठीकृतमन्त्रिखेला ।
शम्भोस्तदानीं जगदम्बिकाया
निष्ठेव निष्ठा नयति स्म राज्ये ॥ ६०

श्रीमच्छ्रीशिवराजराजमुकुटालङ्कारचूडामणि
र्माहात्म्य निजमाप्रसार्य जगतीनाथेषु जाग्रत्प्रभम् ।
कैलासे दमनोत्सवाय गिरिशेनाकारितो नु स्वय
शीघ्र सस्मृतिनाशनाय महसामाद्य प्रतस्थे स्थलम् ॥ ६१

नीलासपर्या शिवलोकचर्या
कर्तुं शिवे भूमिपतौ प्रयाते ।
मार्गोऽशिवोऽभून्निजसेवकाना
तथाऽपि शम्भु शिवराज्यमाप ॥ ६०

यन्त्र त्रिलोहात्मकमात्रिलोक्याऽऽ-
ख्यात स्वतन्त्रे गिरिशोक्ततन्त्रे ।
नियन्तृयन्त्रेऽखिलब्रह्मयन्त्रे
नियन्त्रणा यस्य नियन्त्रणास्ते ॥ ६१

युग्माम्बरा रक्षति वृत्तिचित्रे
चैत्रे सिते वत्सरकालयुक्तके[क्ते]* ।
काम्यातिथौ तत्कलशाभिषेक
काम चमत्कारततिश्चकार ॥ ६२

राजन्नेत्रनभोङ्कभूमिभरिते रौद्रादृते रौद्रके
माघे मासि सिते रथोत्सवदिने मुख्ये मुहूर्ते शुभे ।
शम्भुर्भूमिपतिश्विरर्पसमये सिंहासने भ्राजते
सशोभच्छिवयोरभीतिसुस्फुरच्छत्रप्रभाभास्वरे ॥ ६३

* कालयुक्तसम्वत्सर is from April 1678 to April 1679

† Shivaji s date April 3rd रौद्र

अन्यारण्यसङ्गेन पुरश्चरणसङ्गिना ।
कथित पूर्ववृत्तान्तश्छन्दोगामात्यमन्त्रिणा ॥ ६५

यद्विरोक्त समागत्य गणेन शिवयो रह ।
तत्प्रकाशनमायात मर्म जन्मान्तरोद्भवम् ॥ ६६

तद्वश एव राजन्योऽप्यसौ प्राक्सम्बभूव ह ।
तेनार्यशिष्यसम्बन्ध सुसम्बद्ध शुभावह ॥ ६७

द्वयारप्येकचित्तत्वमभवत्किं तदद्भुतम् ।
सिद्धसाधकता प्राप्तौ सम्प्राप्ते जननान्तरे ॥ ६८

अत्र सम्मतिमाह ।

सिद्धसाधकयोर्भेद स्त्रीपुंसोरिव दृश्यते ।
तयोस्तु भेदसम्प्राप्तौ चपला चञ्चला भवेत् ॥ ६९

तत्सङ्गम सङ्गमेऽस्मिन् श्रीचक्रोद्धारसम्भवे ।
अवश्य सम्भवत्येव भाविसम्बन्धियोग्यता ॥ ७०

सूचनामात्रसम्बन्धो दिङ्मात्रेण प्रदर्शित ।
मनोज्ञवर्णनीयांशे वर्णनीयोऽनुवर्ण्यते ॥ ७१

राज्य प्राप्यमवाप्य शम्भुनृपति श्रीशम्भुभक्तौ दृढ
नित्य श्रीजगदम्बिकाभजनकृद्दानैकशौण्ड सदा ।
सत्सेवन् विपयाननन्तविधया कार्याण्यनेकान्यल
शेमुष्या सुसमीकरोति विपमाण्यहो विचित्रा गति ॥ ७२

प्राग्भाराद्गणनागुणाद्गजपते सिंहासन साधित
नित्यानित्यविवेकसम्मतिसरत्क्रियामयन्त्रान्वितम् ।
यत्रश्रीपरिवेष्टित परमनुल्लङ्घ्य पर पार्थिवै
सद्वस्याभरण ह्यसह्यमनिश दिक्चाम्बरस्याशये ॥ ७२

यावच्छम्भुमहाधनिर्महितधीर्दुर्मन्त्रिदुश्चेष्टिता
दाम्यान परिपाल्येदनियताद् दुर्योगभोगोद्भवात् ।
सूर्ये स्यामन्तकान्तिसहनिमरत्नभ्राटिहाभ्र यथा
ज तूनामशनिस्तु तावदनिश छत्र समागाच्छति ॥ ७३

सेहे तस्य बल बलेर्बलवतो वैकुण्ठनाथादिवत्
शम्भुर्दैवबलेन पङ्क्तिरथवत्तार्णस्तदीया गतिम् ।
आश्चर्यं सुमहत्तर नरपतेश्चर्यानुचर्यानुग
प्राक्चर्या बहुधाऽन्यथा नरपतेर्दृष्टैव दृष्ट्याऽकरोत् ॥ ७४

धिष्ण्येषु दैवज्ञविकल्पितेषु यथा यथा सप्तसु सप्तधाऽभूत् ।
तथा तथा सप्तसु पार्थिवानामङ्केषु वैषम्यभर बभार ॥ ७५

तद्योगादभयार्थमागतवता स्थातु स्थल याचित
दिल्लीशस्य सुतेन शुद्धमतिना श्रेष्ठैः सह क्षत्रियैः ।
सोत्साह ह्यभयङ्कर त्वकनरस्यादाच शम्भु प्रभु
देवस्थानविनाशनोद्भवमनस्तापापनुत्यै स्थिरम् ॥ ७६

दिल्लीशोऽपि यदा सुतोपरि रुपा क्षुब्धाब्धिवच्चुक्षुभे
छत्र तद्रविमण्डल वुरजसा दिङ्मण्डल च क्षणात् ।
शेषोध[च]त्फणिमण्डल विदलित भूमण्डल कम्पित
त्वैक ह्यप्रतिम निरीक्षत तदा शम्भोर्न हृन्मण्डलम् ॥ ७७

सङ्क्रुद्धस्तनय सञ्चचाल दलितक्षोणीशदिल्लीश्वर
श्चित्त चेदिलशाहतकुतुपयो (?) र्दिग्दक्षिण तत्रसे ।
गन्तु सर्वदिगन्तराणि सतत हन्तु सुखान्यप्यल
साशङ्क जगतीतल सममवच्चित्ति शङ्कमासीद्द्वयम् ॥ ७८

सामन्ता शरणङ्गता शशमिरे पुण्डाः प्रचण्डा पृथक् ।
दैत्याशा ववृधुस्तदा गजघटाशुण्डाभृशुण्डायुधाः ॥
चामुण्डावररुद्धसम्भ्रमधर श्रीशम्भुराजश्चल-
च्छात्रव्यापृतपाणिपङ्कजतल स्वैर समाचेष्टते ॥ ७९

सावन्तो वृकवद्वृकोदरनिभा वैरङ्गिना सर्पवत्
श्यामास्याः शुनव सदैव परित कुर्वन्ति कोलाहलम् ।
दिल्लीशोऽपि पुर प्रचण्डवलभृन्नायात एव स्फुरन्
श्रीमद्रायगिरीश्वरो विजयते शम्भुर्नृसिंहप्रभ ॥ ८०

हेलोत्सानविपक्षलक्षदलितप्रत्यर्थिसन्मेखरो
वेलावेरविवर्जितावलिजगद्देवद्विजोत्सारण ।
शम्भो सन्महिमाप्रतापगरिमा वक्तु न सशक्यते
नि शङ्कोऽप्यवरङ्गशाहसदृश शम्भु नृप शङ्कते ॥ ८१

मर्यादा भृगुवंशभूषणमणेरुल्लङ्घ्य सेनाभरैः
साल्टीरीप्रमुखान्पुरन्दरयुतान्देशान्सहाकोकणान् ।
समाब्दावधि कालयन्नतितरां दुर्गाणि ससाधयन्
शम्भुर्दुर्यवनो द्वयोर्यवनयोस्तूष्णीं गलेध्यापतत् ॥ ८२

उत्पाता बहवो बभूवुरपरे कम्पो धरण्यामभूद्-
युद्धान्यप्यतिदुस्सहानि सुमहन्त्याहो बभूवन्पृथक् ।
धृष्टो धैर्यधुरन्धर प्रसृमर पृष्ठे स्वय चेष्टते
सैन्य तत्र महाविधोदधिरिव प्रलयप्रतस्थे त्रिधा ॥ ८३

यन्त्रायन्त्रिक्रमद्भुतप्रतिभट बाणाबाणायित
खड्गाखड्गिक्रमाबभूव तुमुल युद्धं कटारावधि ।
दैवाद्दुर्यवनीयमखिल सुन्दोपसुन्दायित
सैन्य सङ्घलयत्तर समभवत्तूर्णं क्षयैकोन्मुखम् ॥ ८४

धैर्योद्रेकवशात्तथैव युयुधुर्बैजापुरीया पुरा
कृत्वा चक्रियमण्डल बहुविध सीमा समीपागतैः ।
पश्चाद्विप्रवरेण पूर्णमतिना मादण्णनाम्ना समं
त्वासीत्तत्कलवर्गसीमसमयासङ्गो महान्सङ्गर ॥ ८५

दिक्काल निभृता बभूव सुखिता विश्वम्भरा निर्भरा
श्वासोच्छ्वासविशेषमाप सहसा शेषोऽप्यशेष तदा ।
मोहान्मूढधियो मदोद्धतिभरा म्लेच्छा मिथो मङ्गला
श्चक्रुस्ते कुल्यासना बहुतरा नानाविधा दुर्दशाः ॥ ८६

अभिवभार पदातिभरः पुर
यवनदुर्जनसङ्गतिसवृत ।
निकटसम्भ्रमसम्भरसन्धरो
ह्यथ ससार शिकन्दरसङ्गर ॥ ८७

कुटिलमस्तकवेष्टनकञ्चुका
स्खलितवाग्वलिवक्रितकन्धरा ।
अपि महद्विगुनदिनिभा शुभा
विजयदुर्गमल दधाति स्म ह ॥ ८८

अभयहस्तमवाप्य दयादरा-
नृपशिरोमणिशम्भुमहीपतेः ।
प्रकटमुद्भटतद्भटसङ्कुल
सुखमुवास शिकन्दरशाहकः ॥ ८९

निकटतद्भटसङ्कट आगते
सुपरिधौ परिखाभिविधौ स्थिते ।
स्थितिमवाप न कोऽपि तदा स्थिरा
बलमयाचत शम्भुनरेश्वरम् ॥ ९०

बलमदान्निजदेशसुरक्षण
द्विजवरावरबाहुजमिश्रणम् ।
विजयदुर्गमवाप्य महत्तर
तुमुलयुद्धमचीकरदद्भुतम् ॥ ९१

अपि दिल्लीशदल विपुल तदा
परमभूत्परितो भयनम्रम् ।
विनिहतं सुभटैर्बहुशो भृश
प्रचण्डशम्भुनृपस्य सुसैनिकैः ॥ ९२

प्रतिदिन रणभिसङ्गसमुद्भव
सुमृधरङ्गमहो यवृधेनगाम् ।
प्रतिभट मरहट्टकरगाहति
प्रतिगण समदृश्यत एव हि ॥ ९३

जगति शुद्धशिकन्दरविक्रमो
विषयमन्दतया विपदेपथम् ।
बहुविधैर्नु जनैरनुगीयते
न विजिना विजिना परिणि[ पा ]यते ॥ ९४

समय एवमभूदविकोत्तम
गिरिवरूटमिलयमुपागतम् ।
यवनदुर्जनसङ्गविमोहित·
पुनर एव मयादमपाऽकरोत् ॥ ९५

निनिहतो नु वृथा द्विजपुङ्गव *
परिहृत परितोप इव श्रिय ।
प्रतिहताऽखिलकार्यविचारणा
प्रतिगता किल कुत्सितधारणा ॥ ९६

कृतभिदा स्वरङ्गपरोऽस्खलन्
निजरुषा कवलीकृतविग्रह ।
स्वपरसमेतशिव-दरनिग्रहे
प्रकृतिविग्रहभेदमयो व्यधात् ॥ ९७

यदपि फेरुपद प्रतिरोपिता
स्तदपि सिंहकनाम समेधिता ।
प्रतिदिन बहलोल्मुखास्तदा
यवनलक्ष्यपरा सहसाऽभवन् ॥ ९८

धृतिरगाद्धरणीतलतोऽखिला
सकलशूरजनस्य रसातलम् ।
प्रचलित खिलशम्भुबल पृथक्
सुविलसा हि निदानपरा जना ॥ ९९

यदपि दूलककर्मरत स्थित
स्तदपि नो विभिये सुमहद्भये ।
कृतशिव-दरसार्थसमुत्सुको
नृपशिरोमणिशम्भुसुमन्त्रिक † ॥ १००

अपि कलत्रयुतोऽपि परम्परा
न विजहौ निजधर्मपरम्पराम् ।
कविपयैस्तु जनैरनुवेष्टितो
भ्रमतावदति[वि]ग्रदुरासद ॥ १०१

प्रबलदुर्यवनोद्भवकृद्भये
सुदयया दयति स्म दयानिधि ।
अत उपागत आशु दयानिधि
प्रचुरमादरमाप नृपान्तिके ॥ १०२

* Madanna ?
† Kaluṣa

यवनसङ्गरमेव रक्ष य
स हि बभूव शिकन्दररक्षक ।
अपि विधौ विपरीतपथि स्थिते
किमिव नो विपरीततर भवेत् ॥ १०३

तदनुसारवशा द्विजदुर्जना
यवनकौलरता सुतरा धृतिम् ।
अपि भवानुभवे प्रभवे पर
सुचरित निल कौलरता यथा ॥ १०४

स्थलनिराशतया विमु तत्यजु
सुजनसेवनसत्प्रभुसम्मतिम् ।
विगतवासनया गृहमेधिन
सकललौकिकलम्पटता यथा ॥ १०५

प्रचलिता प्रबला परिखोपरि
द्रुतमिराणतुराणसमुद्भगा ।
परिगृहीत शाहिति.. :
.सुचुकुशुरद्भुतमुच्चकै ॥ १०६

पारावारानुकारा प्रबलदलभरा पातशाहस्य पश्चा
दातोप घोषयन्त प्रमुदितहृदया ह्यासमन्ताद्भ्रन्ति ।
नानाघोषानुसारा: समरजयभृतो वाद्यघोषा समन्ता-
त्थानास्तप्रचारा इव घननिवहा. काण्डसङ्घाञ्जरन्ति ॥ १०७

हस्त बीजापुरे द्राक् प्रसभमुपगते राजणाभो दिल्लीश.
प्रारंभे गोल्कुण्डाधिपकुतुपकृते प्राक्समारम्भणानि ।
मूढस्त पुत्रमल्ला प्रमुदितहृदय सर्वकाल समास्ते
नो जानात्येव पाप स्वकृतफल्गुणां कर्मणा दुर्विपाकम् ॥ १०८

आसेतो स्थानहेतो. कपटकृतमल्लोद्घाटण किं कपाटो
दौर्मन्त्र्याद्गोल्कुण्डाधिपकुतुपकृता कार्यभङ्गोल्कता वा ।
बीजापु[पू]र्यस्तभावो बहुविधिनयता भाविनो भाविकार्ये
किं वा दिग्दक्षिणाया कलुषमकलुषिता व्यस्तनैवाविरासीत् ॥ १०९

भूदुर्गाण्येव पूर्वं कतिचिदभयकृत्प्रेममार्गैर्गृहीत्वा
सेना कार्णाटकेषु प्रकटकपटयुक्सूचनाभिः प्रसार्य ।
इन्द्रप्रस्थोपयात्रा निवृतिकृतिवशाच्छम्भुयित्वा दिलीशो
मूढ भीत्या निगूढ धुतुपरगतिन क्रोधपात्र चकार ॥ ११०

चातुर्यं प्राप्य प्राप्त बहुदिवसनयाभ्यासयोगात्तुरीय
मादण्णा मारणीयो यवनतुलपते कोटिशोऽप्यर्पणाया ।
द्रव्य वाजापुरार्थं त्रिगवि करुणया रक्षणार्थं प्रदेय
दिल्लीन्द्रस्यैव हस्तादकवरसहित शम्भुराममानीय ॥ ११२

एव धाटीप्रपाटी कपटविरचिता शम्भुभूपेऽनुसार्य
प्रच्छन्नाश्वासनेन प्रबलतरभटाभद्रयित्वा धनेन ।
विश्वासाघातपातप्रभवसुखमयो भोकुराम प्रकाम
कामाचारप्रचार धुतुपरपटधार्पितामुज्जहार ॥ ११३

नानाव्यापानुवेषानुसृतिकृतिपरा प्राणवन्तो दिलीश
क्रोधावेशानुर्नावे[चै]रुपरि च परित प्रादुरास समन्तात् ।
लोकानादर्शयन्त कम्कर्त्तिमिव द्राक्केर्यमपाक
दुष्टा दुष्टेष्टयैव प्रसभमभिमुख चेष्टयामासुरेनम् ॥ ११४

युद्धारम्भेषु यन्त्रप्रमवखभर सार्धयामार्धयाम
पद्मामोदेशमात्र प्रलयसमयता का तु लीला बभार ।
पश्चात्पाथोधियुग्मोमिलनसमयज सेनयोस्तद्वदप
क्षुभ्यन्मर्यादिमुद्रा जलधिसमभवद्वाव एवोज्जजृम्भे ॥ ११४

भागापुर्यानुपुर्यावृतिषु विगलितप्राणसम्प्राणनाशा
काचिन्नार्यानशहीना समरजयविधौ कान्तिरवासनार ।
सारासार विवेक तदनु च सहसोत्क्रुस्य दूरानुदूरा
दिन्द्रप्रस्थेन्द्रनाथ वरितुमिव पुरो ह्यासुरा श्री ससार ॥ ११५

युद्ध त्वावर्तमात्र दृढतरमतुल यैस्तु नून प्रवृद्ध
ध्वस्त तैरेव नाचे कुतुपनियमिते पामरानामिकाख्ये ।
धर्माधर्मादिकार्याचरणकरणकृद्धदभावोज्झिताङ्गै-
र्ध्वस्तैरेवामघातो विगलितमनसामग्र एव बभूव ॥ ११६

ब्रह्मस्त्रीघातपापक्षुभितहरघुरन्नेत्रवह्न्युत्थचक्र-
ज्वालाजालावलीढं कुतुपकपटिनो राज्यमाविर्बभूव ।
पश्चाद्दिल्लीन्द्रचक्रभ्रमणभरनत तेजसा व्याप्त त
न्नष्टं चासेतुसीमावधिजननिदित पप्रथेऽल प्रतस्थे ॥ ११७

व्याली प्रोत्साहवायोर्विधुतिरशनिजा धैर्यभूमीरुहस्य
द्रोहाद्रिकस्य जाया त्रिभुवनजननी कालचक्रस्य माया ।
क्रुद्धवस्तान्यलोकस्य च हृदयतले मोहमार्गानुसारा
ससारध्वान्तधाराह्वतिरतिशनकैर्निर्जगमाजगाम ॥ ११८

चेष्टावन्तो विचेष्टा प्रकटतरमथो केऽप्यभीष्टस्य नेष्टा
प्रेष्ठा प्रमास्पद नो दधति मतिहता प्रेयसीषु प्रियासु ।
चिन्तासञ्चर्वितान्नाश्चलनवलनजप्रक्रमप्रोज्झिताशा
प्रत्यक्ष प्रेतभाव सपदि परिगता प्राणिन. प्रत्ययन्ति ॥ ११९

एव नानाप्रकारैरनुदिनमसकृज्जायमानेऽभ्युपाये
प्राकारान्त पुरेषु प्रबलकृतभिदा विद्यमानेऽप्यपाये ।
पापौघे पूर्यमाणे परमविमुकृपावीक्षणे क्षीयमाणे
नानासाहप्रधानो ह्यभवदभिमुखो नैव नीचो निदाने ॥ १२०

सार सार समस्त कृतमिह सहसा नीचविस्तारयोग्य
भोग्य यद्वस्तु वाम तदपि विरचित नाममात्राभिरामम् ।
ग्राम ग्राम प्रकाम प्रथितनरमथो ग्राम्यनैवाविरासी
द्वामाचाराद्विधात्रा कुतुपनरपुरे नामनैव प्रदर्शि ॥ १२१

दाक्षिण्य दक्षिणात सकलशुभकलावीक्षण वीक्षणात
प्रोत्साह चालनात प्रकृतिकृतिविधौ प्राणन प्राणनात ।
नैर्मल्य कल्पनात सरसनरगुण कोऽपि कान्ताङ्गनात
किं किं न क्षीणमासीत्कुतुपनरपुरे क्षीयमाणे क्षणेन ॥ १०२

द्वाद्व[द्वन्द्व] पङ्के निमग्नद्विप इव सहसा उपोज्जहारे विलम्ब
कुर्वन्कार्याण्यनेकान्यतिविषमतराण्याशुसम्पराणि ।
दैवाद्योगाभिधाभ्या द्विरदनपदवी प्राविनाभ्यामुभाभ्या
दिल्लीन्द्रो दारुणाभ्या कुतुपनरपुर भञ्जयामास नित्यम् ॥ १२३

स्यात् किं प्राह्यावैरुदैरैर्यनिरभमभरप्रोल्लसल्लीलया वा
लोकानादर्शयन् किं निजवरविभव प्रोल्लसद्वेलया वा ।
शम्भोस्तद्वत्तनूजस्य च समितिमती सम्भ्रमूटो दिल्लीश
क्रोधान्धो वासगन्ध प्रकृतिमुपगतो वीक्षण नो चकार ॥ १२३

प्रत्यूहप्रतिवानिशातिशुभदा शम्भौ नृपे सर्वदा
शम्भुस्नेहपरम्परैव नितरा वर्वर्ति सर्वोपरि ।
सर्वेऽपि प्रतिपन्थिनः प्रसरिता अन्तर्बहि स्था जना
जानाति जनतागतो जनपद का नो गतिर्भाविनी ॥ १२४

स्थाने स्थाने सुखाना प्रकृतिरुपाटिन प्रेषिता प्राक् पठाणा
प्राणानुसृत्य कार्येष्वभिमतमतय स्थापितास्ते तुराणा ।
श्यामास्या लोहितास्या सलिलनिधिपथे प्रायश सावधाना
जोष रोष विधाय हयवरविषये धातुपोष पुपोष ॥ १२५

प्रेमाविर्भावभेद विविधविधितर द्रागदत्वाविनाथे
नाथन् दिल्लीन्द्रनाथ स्वसुतविषयक सामरस्य समस्यन् ।
नित्य सन्तुष्टचेता वरतनयविषयेप्यागतो नु प्रचेता
अयथो दर्शन नो हयवरसुमतेर्भावि भव्य बभाण ॥ १२६

प्राय राज्यमकण्टक वरगत यद्वत्तनूजस्य तत्
तद्वत्सम्मनुतेऽवगृह्यवनोऽस्याधिपादा मताम् ।
नो जानाति दुराशया विदलित दुर्गादरामादिभि
रिन्द्रप्रस्थसमृद्धराज्यमखिल मस्त प्रदत्त शिशो ॥ १२८

किं साध्या मम किं भवेन्नियमु भवेत् किं वा भवद्दर्हणा
विश्वम्यानवरीति[ग्स्य] कापिदपि ना दिल्लीश्वरे धारणा ।
तस्मादप्यनुमीमहे प्रियधूने प्रायेण पृथ्वासने
कार्याकार्यविवेकमेव सहसा पश्यन्ति न केचित ॥ १२९

कोपावेशभरात्तदा हयवरो दिल्ली प्रतस्थे यदा
युद्धार्थ पन्नाता बहुवल देगाद्दिदेशासुर ।
दुर्गादासमुखैर्धनाप्रभृतिभि शूरैस्तत शाम्भवै
सम्पातसहस्रागमध्य रचना चित्राऽद्भुताऽऽसीत्तदा ॥ १३०

स्थित्वान्यत्रधिया त्रिभिर्दृढतरं सूत्रं त्रिधा सूत्रितं
शम्भुश्छत्रपतिस्तथा ह्यकबरश्छन्दोगमन्त्र्युत्तरं ।
सिन्धोर्मार्गं इतोऽधिकोत्तमगुणो विज्ञाय निर्धारितो
येनासौ समवाप शाहसदनं दिल्लीन्द्रदर्पापहम् ॥ १३१

स्वल्पं स्वभवदाततं तमसकृत्सम्यङ् निनाय क्षणा
दाक्षिण्यात्परमेश्वरस्य करुणा जाग्रद्दशा दुर्दशाम् ।
आरब्धाधिपतोपमाब्वजनितं दिल्लीश्वरेणाऽप्यलं
नानाग्रपवृथामनोरथशतैर्मोहात्समाराधितम् ॥ १३२

शम्भुश्छत्रपतेस्तदैव सुयशस्तामैत्रसोमोदयो
ह्यात्रैवासमथाविमेरसमभूदास्तादिपूर्वाचलम् ।
आवास समवाप्तयानकवरस्य त्रासशाहस्य तं
च्छ्रुत्वा त्रासनिवास एवमुदभूद्दुष्टस्य दुःखोदधि ॥ १३३

श्रीमच्छाहअकब्बरे गतवति प्रायेण विघ्नं विना
स्वात्मानं कृतकृत्यमेव मनुते शम्भुः प्रतिज्ञान्तरम् ।
राज्यद्वन्द्वमहर्निशं रणभराद्दह्यन्[न्तु] निर्द्वन्द्वतं
कृत्यं धिक्कृतमेव सामि मनुते सर्वं तु दिल्लीश्वरं ॥ १३४

राज्य यातु पुनः प्रयात्वकवरो निर्यान्तु सयान्तु वा
स्थानस्थाः प्रबलाः प्रचण्डयवना अर्हन्तु गर्हन्तु वा ।
स्पर्धन्तु प्रकटं प्रसह्य समरे सीमास्थसामन्तका
स्वस्तिक्षेमतया नयामि नमयन्सर्वानपि द्राहिणः ॥ १३५

कारागारनिवेशनाय निभृतं शूरा सुताः कल्पिताः
स्वीयैरेव चरित्रैः शुभतैस्तातोऽतिसन्तोषितः ।
इन्द्रप्रस्थमुपेत्य पूर्वसुकृतैरौरङ्गजेबेन सत्
कापि सर्वमकारि छद्मविधृता वन्ध्या [ध्या] कृता नान्यथा ॥ १३६

पुत्रं धर्तुमपेच्छति स्वकवरं वैरानुबन्धाद् ध्रुवं
जीर्णं चारित्रदास्तुन निजवयो जानाति नित्यं नवम् ।
नाऽस्यानिषिधा गतोऽपि कुरुते क्व वा नवाभ्यर्थना
मभ्य सुतनं प्रयाति सुनरा धारापदस्याशया ॥ १३७

आधिस्तैल्फणोद्गताशय इतो वर्धिष्णुता सययौ
व्याधि पुत्रनिरोध एव ववृधे भूयस्तरा मानसे ।
यद्यप्यलतिरोषत प्रकुस्तेऽप्यन्यत्र कोलाहल
सम्यग्दृश्यत एव साधु न तथा रङ्गोऽतरङ्गोद्भव ॥ १३६

कीर्ति सुप्रथिता तथैव चलिता सत्वाब्धिसीमास्थल
सम्प्राप्ते त्वनुकूलतामकबरे सत्तोत्तरे वत्सरे ।
राजा रायगिरौ रतान सुतरा सह्याद्रिसत्ताधने
शम्भु शम्भुकृपाभरादवभृथस्नान प्रकुर्वन्निव ॥ १३७

राजान शिविराजराजसदृशा भूयोऽभवन्भूतले
तत्कोटीसमतीत एव सहसा शम्भु शरण्योऽभवत् ।
दुर्गादाससमन्वित परिकर बध्वा ररक्ष ध्रुव
निष्क्रान्त कलिकालकाल्ययवनक्रान्त तदीय सुतम् ॥ १४०

एकैक समनुक्रमेण सकल चैतत्र नो दृश्यते
शर्वाणीपतिशर्मशुद्धकृपया शम्भौ तु सर्व त्विह ।
घोरेऽस्मिन्कलिकालके कलिमलक्रान्तातिलोकान्तरे
मानुष्य ह्यतिदुर्लभ तदनु सद्राज्य तत सद्यश ॥ १४१

शम्भुश्छत्रपतेरस्वरविधौ जाते महोदारता
रायस्याणुरथा नु का तदधुना केनोपमेय प्रभु ।
धैर्य धीरधुरन्धरस्य सुदृढ वीरस्य वीर्य तथा
देहत्यागविधि विनाप्यपरया को नाम तर्तु क्षम ॥ १४२

यस्यास्तित्रयरशादसन्ति सदनेष्वष्टौ महासिद्धय
सिद्धेवास्ति सरस्वती सुवदने सिद्धा• सदा सार्थिनः ।
सैवाशु प्रसरीसरीति हृदये भक्तिर्दृढा शाम्भवी
शम्भुश्छत्रपतिर्दृढो दृढतर छत्र सुराज्य दृढम् ॥

मोद नैव दधाति नो प्रकटयत्यानन्दसन्दोहिनीं
वाच वाचन साम्प्रत नु पतिना मोहेऽपि सम्मोहिनीम् ।
मर्यादेव मुदाहृतिर्विदलिताप्यष्टादशाक्षोहिणी
मन्दाक्ष मनुते मन स्म सुरराट् मन्दाक्षमामीक्षते ॥ १४३

विष्णुद्वेषसतृष्ण एव नितरामासीत्पुरा प्रेमत
शम्भुस्नेहपराङमुखोऽप्यतितरा मूढो वरीवर्तते ।
तद्वद्दुष्टदिल्लीश्वरोऽपि निरसन् लग्नोऽस्ति युद्धोद्यमे
नो जानाति यथैव काल्यवन॰ काल शिरस्थ स्वकम् ॥ १४३

सर्वेऽपि प्रतिपन्थिन प्रसरिता अन्तर्बहिस्था जना
जानीते जनतागतो जनपद क्व नो गतिर्भाविनी ।
प्रत्यूहप्रतिघातिकातिशुभदा शम्भौ नृपे सर्वदा
शम्भुस्नेहपरम्परैव नितरा वर्तते सर्वोपरि ॥ १४४

सर्वेऽपि प्रथिता प्रतापभरिता प्रौढाहवाडम्बरा
प्रारब्धप्रचुरोत्सव हरहरेत्याभाषमाणा भटा ।
सानन्द सकुतूहल बत महामन्त्रोन्नता मन्त्रिण
शम्भाश्छत्रपते सहैव सकलाश्चक्रु पर विस्मयम् ॥ १४५

याते सागरमागरालिभिरभिव्याप्त[से] तनूजे निजे
शम्भोश्छत्रपते प्रभावभरतो नीराग्रगण्येऽधिकम्
दिल्लीन्द्रोद्धतचिन्तया परिवृतो निद्रा न लेभेऽनिश
श्रीपूर्णेऽकबर क्षुधा हृदि धृढ सन्तापमापचिरम् ॥ १४६

दाता दानपरायणोऽधिसरणो नानागुणालङ्कृत
शम्भुश्छत्रपति प्रतीपदलन सम्प्रेपयित्वोदधिम् ।
प्रेम्णाकब्बरमाशु मन्त्रिनिवहै साक स्वचित्ते मुद
दध्रेऽनन्तमति प्रतातचरित क्षोणीतले साम्प्रतम् ॥ १४७

———

## Section II

### RAJARAMA'S ACCESSION AT RAJGAD

कवीन्द्र उवाच ।

अथ कृताग्निसंस्कारा महाराजस्य धीमतः ।
पुरोहितप्रभृतयो मन्त्रिणो मन्त्रकोविदाः ॥ १

प्रातर्द्वितीयदिवसे राजारामस्य मातरम् ।
ममता नाम दैत्यानां मायां कार्यार्थमागताम् ॥ २

दैवासम्पादितमनोरथां स्वार्थपथि स्थिताम् ।
आतंकानन्दभरितां नहि शोकपरिप्लुताम् ॥ ३

शोचन्तीं चिरकालाय रुदन्तीं घर्घरस्वरम् ।
परिनिर्मेच किञ्चिदूचुरुच्चैः समाहितुम् ॥ ४

मन्त्रिण ऊचुः ।

कष्टं कष्टं महत्कष्टं विधात्रा रचितं विधिम् ।
अनुगच्छन्ति मनुजाः पशुपक्षिमृगादयः ॥ ५

धिगस्तु दृष्टिरस्माकं धिगस्तु ननु जीवितम् ।
यत्र जीवामहे यत्र महाराजविनाकृताः ॥ ६

अन्तवन्त इमे लोकाः शोकास्तत्र विकारिणः ।
अनुभूय प्रभूतानि नाम गच्छन्ति योगिनः ॥ ७

प्रिया पुत्री प्रियः पुत्रः प्रियौ भ्रातरसोदरौ ।
पितरावपि हि स्नेहाः कुर्वन्ति मानवाः ॥ ८

कृता यज्ञास्तपस्तप्तं जप्तो नानाः सदाशिवम् ।
महापदाश्रयाः किं न यस्मान्न गणयन्त्युत ॥ ९

परलोकप्रसक्तस्य स्वर्गस्थितस्य किं भवेत् ।
यथाऽमृतेन तृप्तस्य घटवारि किमाचरेत् ॥ १०

पारलौकिकसक्तानां कठिनं मानसं किल ।
चन्द्रं न नभो गिरा विष्णुरतन्द्रः कम्पो न पश्यति ॥ ११

अखण्डपण्डापाण्डित्यपरिखण्डितपण्डिताः ।
दण्डीनाखिलेनैण्डी तुण्डीं मा दधनश्चिरम् ॥ ६७

स्वविशेषैः शेषमपि भर्त्सयन्तो सुधीवराः ।
अशेषा भाष्यवक्तारो वैयाकरणिका अमी ॥ ६८

अतर्क्यतर्ककलित[ता]शेषब्रह्माण्डमण्डलाः ।
प्राकामकामाः सोत्साहा महान्तो बत तार्किकाः ॥ ६९

प्रध्वंसितमहामायाविकारपरिलक्षिताः ।
स्वमतस्थापनस्वस्थाः केचिन्मीमांसका अमी ॥ ७०

घोषणातोषणस्फीताः स्वरशिक्षाविचक्षणाः ।
स्वच्छन्द छान्दसाः सर्वे स्वच्छाः प्रोच्छायतर्पुलाः ७१

गणयन्तोऽतिगणशो भगणद्गुणरङ्गिणः ।
गणकाः शास्त्रगुणनागुणिनो गणिनाशया ॥ ७२

इदं कार्यमकार्यं वाऽकृत्य कृत्यमिदं खलु ।
समालपन्तः सतत प्रथिता धर्मशास्त्रिण ॥ ७३

नानातन्त्रार्थवेत्तारश्छेत्तारः कार्मणस्य च ।
शर्मणो निलयीभूता सुलया बत मान्त्रिकाः ॥ ७४

असद्वैद्यकमिदं त्वधरसवतिरंजनम् ।
इत्यालपन्तः परमवन्दोगा वैद्यका ध्रुवम् ॥ ७५

चारुसङ्गीतविद्वद्गीता गीताः किल क्षितौ ।
गायकाः सार्वभौमिता गन्धर्वा इव सुस्वराः ॥ ७६

कलानिद कलकलाः सकला कमलानुला ।
सर्वाम्भविमलोकभूताभेनोविहारिणः ॥ ७७

अचिन्त्यमादित्यमहाप्रौढिमानमहोद्यमाः ।
विचक्षणाः केऽपि नवोजृम्भमाणसुलक्षणाः ॥ ७८

कृतनाट्यश्रमा ज्ञातार्थितसम्भूतनाटकाः ।
कार्णाटका नटाः स्वप्रकर्षाश्लक्षकौशलाः ॥ ७९

कथानां कथकाः केऽपि विदग्धाः कृतकौतुकाः ।
मदस्थानां यवस्थानां प्रशस्थानां मनामपि ॥ ८०

इतिहासपुराणज्ञा विज्ञाः सुज्ञजनप्रियाः ।
पौराणिकास्त्यक्तशङ्का निष्कलङ्का गुणोज्ज्वलाः ॥ ८१

पाखण्डताण्डवाखण्डा वितण्डावादडिण्डिमाः ।
मण्डलीभूय मिलिता रत्नकुण्डलमण्डनाः ॥ ८२

अपरेऽपि च विद्वांसो सहसोत्सवहेतवः ।
सेतवो ज्ञानविज्ञानसागरस्य जितश्रमाः ॥ ८३

बौद्धाः सिद्धं इत्यासिद्धार्थाल्पप्रतिनिदर्शकाः ।
कर्कशा जठरापूर्तिमात्रोदर्काः प्रकामुकाः ॥ ८४

अनवद्यमहाविद्यागद्यपद्यप्रवर्तकाः ।
कवयः सन्नयोपेता नवयोगप्रदर्शकाः ॥ ८५

उल्लसच्चारपीयूषकरा दस्रानुकारिणः ।
चिकित्सकाश्चिकित्सासु सर्वासु कृतगौरवाः ॥ ८६

ज्ञातकोशाः खड्गगजहयलक्षणवेदिनः ।
अखर्वगर्वैकमहापर्वताः शर्वसेवकाः ॥ ८७

नानायोगप्रवक्तारो योगिनो गतविभ्रमाः ।
ससम्भ्रममिहायाताः संयता यतवासनाः ॥ ८८

अनेकरत्नकेयूरधारिणो वारवाणिनः ।
सभ्याः केऽपि महाशूरा इभ्या अपि समागताः ॥ ९२

बालमार्तण्डरपान्ति प्रतीक्षन्तः क्षणं क्षणम् ।
राजारामस्याभिषेकं वसन्त्यातोरणान्तरम् ॥ ९३

स्वसारेऽस्मिन्नसारेऽपि क्षणिकैकसुखास्पदे ।
स्वससारे स्वराज्येऽस्मिन्मा निर्वेदमुरीकुरु ॥ ९४

अशाश्वतमिदं सर्वं विगणय्यातिशाश्वतम् ।
वर्तितव्यं मनुष्येण नव्यभव्यप्रतीक्षया ॥ ९५

स्वायत्तो यावदात्मास्ति सर्वे परिचरा अपि ।
तावद्यत्नं समातिष्ठेद्यत्नाद्भद्राणि पश्यति ॥ ९६

स्वदृक्परीक्षणायासः प्रकर्तव्यो विपश्चिता ।
संस्कृत्य सकलं लोकं स्थिरायां स्थीयतां स्थिरम् ॥ ९७

न धैर्येण विनोद्योगो नोद्योगेन विना धृति ।
धृत्युद्योगौ समारभ्य स्वार्थे कार्ये प्रसज्जना ॥ ९८

वैकल्य कीरनां प्राहुर्महासाम्राज्यभञ्जनम् ।
अतो शृणु समुद्योग सुयोग नीरनान्धवे ॥ ९९

राजनीतिरिय शब्दद्विधे विश्वविमोहिनी ।
विश्वेशेन विभातव्या सर्वदा राज्यतर्पुणा ॥ १००

इतरेषां तु लोकानामन्यो धर्म सनातन ॥
राजर्षीणां पुराणानामन्यदीयोऽस्ति सुव्रते ॥ १०१

राजा विराजते लोके लोकरञ्जनकारणम् ।
अतोऽन्यथा विधातव्य स्वधर्मो विजिगीषुणा ॥ १०२

सन्धार्यो देशपदवी पार्श्वरेव सर्वथा ।
राष्ट्रोपद्रानुवीनेन सह एव महा[महत्]सदा ॥ १०३

असमर्थेन कर्तव्यो यत्न सादो दिने दिने ।
भाव्य महीमहेन्द्रेण महाविक्रमिणावनौ ॥ १०४

असमर्थ. कथ स्वार्थ रमनेऽर्थ समर्थवत् ।
समर्थे सर्वथा सिद्धिरर्थिनोऽर्थन्त्यनेकदा ॥ १०५

शाहराजस्नुषा वीरमहाराजशिरोमणे
शिवराजस्य राणी स्मरणीयोत्तमकृणा ॥ १०६

सर्वार्थसाधिनी वीरकन्या मोहितवशजा ।
धीरमाना वीरधुरीणत्रनपरायणा ॥ १०७

मत्र प्रशाधि सकलानिकुरान्वहर्षिन ।
राजाराम पुरस्कृत्य महासाम्राज्यदीक्षितम् ॥ १०८

महाम्बुधिपरिभ्राजमेघडाचम्याचिनाम् ।
वसुन्धरां शास्तु चिर राजाराममस्तकामज ॥ १०९

पल शल पुन मन्त्रमिदमेव न सशय ।
यतामहे वय सर्वे तव हेतोरनन्तरम् ॥ ११०

इति समभिहितार्थ प्राथिता मन्त्रिमार्थ ।
प्रणिततमदशोभिः साडय नयय मरप्यम् ।
विल कलिभिवान रय मानसा सादन्ती
विभवि मरण्यानी मम्भर्मेगाननन्द ॥ १११

इत्थं नानाहितार्थं हितमिव कलिना प्रस्तचित्तैस्तदग्रे
प्रेम्णा सम्बोधिता सा शिवनृपरमणी कारणीभूय किञ्चित् ।
ऐच्छद्वक्तुं निविक्तै[बुध]समधिषणा दैवयोगावतार्णा
वीरस्तार्णां क्षोणिमेता निजशुभचरितैरिच्छती व्याप्तुमारात् ॥ ११२

इत्यनु० अध्याय ॥ ? ॥

कवीन्द्र उवाच ।

इत्थं राजकुमारस्य राजारामस्य सा प्रसूः ।
मन्त्रिप्रवरसम्प्रोक्तां व्यक्तामाकर्ण्य भारतीम् ॥ १

आनन्दसिन्धुलहरीसम्भ्रमद्धृदया सती ।
तत्कालोपहितं वाक्यमाजहार शुचिस्मिता ॥ २

राजपत्न्युवाच ।

सत्यमुक्तं भवद्भिस्तु प्रभवद्भिरहर्निशम् ।
सनाथेवानुनाथामि बत राज्यमकण्टकम् ॥ ३

तथाऽपि मम चित्तस्य न पर्याप्तिः प्रदृश्यते ।
बलिना परिभोक्तव्यं बलिना निखिलञ्जगत् ॥ ४

अन्वेषयन्ति सततं द्विषिणश्छिद्रमप्यरम् ।
राज्यस्याबल्या तत्र यत्न कीदृक्प्रकल्प्यताम् ॥ ५

बलेनैव भवति राजा लोकेषु केवलम् ।
बुद्धिमान्नातिमान् शश्वदामुङ्क्ते परमम्पदम् ॥ ६

नीतिरेव पुरस्कार्या कार्याऽकार्यं विजानता ।
आर्यवृत्तं विचार्याशु वर्तितव्यं प्रयत्नतः ॥ ७

यत्नवाविजयी लोके समुच्छति महत्पदम् ।
शङ्खो मुरद्विषा मत्स्यजनुषा स्ववशीकृतः ॥ ८

कपटैकपटाच्छन्नाभूय पात्यो बली रिपुः ।
सख्यं विधाय शक्रेण वृत्रोऽयं विनिपातितः ॥ ९

सदसद्वापि कर्तव्यं निर्विशङ्कं बुभूषुणा ।
नृपेण राज्यं सम्प्राप्य वर्तितव्यं यथा तथा ॥ १०

सहजाः सुहृदः कचित् कृत्रिमाः केचन स्मृताः ।
उभाभ्यामनुकूलाभ्यां राज्यमुद्योतते चिरम् ॥ ११

केचित्स्वपक्षमाश्रित्य परपक्षमुपासिन ।
अदभ्रधिषणाभ्रशमभ्रमञ्जनयन्त्युत ॥ १२

कृत्रिमा दुर्हृदः केऽपि तथा साहजिका अपि ।
राज्यक्षयाय महते सन्नद्धाः सन्ति सर्वथा ॥ १३

बहिरुत्साहजनका अन्तर्भेदविकारिणः ।
नराः पिशुनकाः केऽपि घातयन्ति नृपश्रियम् ॥ १४

उत्साहभङ्गिन. केऽपि कृतकार्यैकरञ्जनाः ।
जनयन्ति नृप भूयो वैक्लव्यैकनिकेतनम् ॥ १५

केऽप्याशयैकज्ञानार्थं सावधानेन चेतसा ।
कथयन्ति कथाः काश्चिच्चित्तनाशानन्दहेतुकाः ॥ १६

वाचाटिकाः केऽपि नरा प्रजल्पन्तः स्वपौरुषम् ।
रञ्जयन्ति नृपश्रेष्ठं वृथा समनुजीविनः ॥ १७

किञ्चिदुच्चार्य कर्माचरन्त कैतवान्विताः ।
आघातयन्ति भूमीन्द्रचन्द्र परिचरा. क्वचित् ॥ १८

मायामोहमदाविष्टा दिष्टया दिष्टाः कचित्कचित् ।
साकमेवात्मना नाथं मज्जयन्त्यसुहृज्जले ॥ १९

हिताय यतन कांश्चित्स्वामिनो यतमानसान् ।
आतन्वन्त्यपरे केचिद्भेद मिथ्याप्रलापिनः ॥ २०

सहस्रभानुप्रतिमाः प्रतापप्रथितौजसः ।
काश्चित्स्वामिहितान्केचित्प्रशयन्ति मनिभ्रमै. ॥ २१

उत्कर्षमपि केषाचिदसहन्तो नृपगृहे ।
राजानमन्यथा बुद्धिं दर्शयन्ति मुखप्रियाः ॥ २२

मिथ्या केचि प्रशसन्ति राजानमनयोधनम् ।
साधयन्ति पर स्वार्थं समर्था इव सर्वथा ॥ २३

नानाशृङ्गारभङ्गीभि. सुभगाभिरिवस्तन ।
व्यामोहयन्ति गन्तारं जनाः केऽपि प्रियंवदा ॥ २४

आशामात्रविधानप्रविज्ञाः प्रायशो जनाः ।
पातयन्ति नराधीश गलन्मयाहिते परे ॥ २५

केचिद्भिन्नपदमर्यादा दर्शयन्त. कृतार्थवत् ।
विवदन्तः फणा भूप दुराग्रहे स्थिरा पदौ ॥ २६

अप्रधाना प्रधानत्सु प्रथयन्त प्रधानताम् ।
असन्धानेऽनुसन्धाय भूमीन्द्र मज्जयन्त्यमी ॥ २७

मुखदाक्षिण्यमासाद्य सद्य स्निग्धतराक्षरा ।
केचित्क्षोणीन्द्रहृदय हरन्ति सदय बल ॥ २८

नानानतिमतिप्रौढिसेवाभि· पुरतोऽधिपम् ।
रञ्जयन्ति पुन पश्चाद्विहसन्त्यप्यलक्षितम् ॥ २९

स्वामिनोऽग्रे प्रतिज्ञाय महत्कर्मापि मन्त्रिण ।
मिथ आमन्त्र्य सम्मन्त्र्य समुपेक्षा चरन्ति ते ॥ ३०

आदिष्टा· क्षोणिचन्द्रेण क्षीणारातिपराजये ।
निर्णयन्ति त द्रव्यैर्मन्त्रिण स्वार्थदर्शिन ॥ ३१

स्वस्वाभिमानहान्यर्थं व्यर्थं शत्रुपताकिनीम् ।
समानयन्ति नयतोऽनयतो मानपूजिता ॥ ३२

वृत्तान्तजातमखिल खला केचन मन्त्रिण· ।
आवेदयन्ति रिपवे स्वाम्युत्कर्षपराङ्मुखा ॥ ३३

अनल्प स्वामिनाक्षिप्ता प्रज्वलन्तश्चिर हृदि ।
जनयन्ति मिथो भेद छेदयन्ति नृपश्रियम् ॥ ३४

इत्थ महादु खभार प्राज्य राज्य नराधिप· ।
रुन्धन् छिद्राणि सर्वाणि स यशोकुरुते चिरम् ॥ ३५

क्षोणीन्द्रचूडामणिना बलिनातिसुबुद्धिना ।
ज्ञात्वा सर्वस्य हृदय वर्तितव्य यथायथम् ॥ ३६

अथ मे तनयो बालो हरिणो हरिणेक्षण ।
कथ भार समर्थ स्याद्वोढु सोढुमरेर्बलम् ॥ ३७

दिल्लीन्द्र सतत सान्द्रच्छिद्रान्वेषी दुराशय· ।
नि सशय भक्षयिता बालक मामकम्बलात् ॥ ३८

शम्भुराजापि मेधावी क्रुद्ध क्रूर· कृतान्तवत् ।
नून कृतान्त पुत्र मे कृतान्त प्रापयिष्यति ॥ ३९

अहमेव निजान्प्राणास्त्यक्ष्यामि हतदु खिता ।
कदापि नैव शक्ष्यामि वैमात्रेयात्पराभवम् ॥ ४०

युष्मान्समाराध्य

---

## Section III

### LAST DAYS OF SHIVAJI

श्रीगोविन्दाय नमः । कवीन्द्र उवाच ।
एकमेवेश्वरं स्वस्य बतेश्वरममन्यत ॥ १

तदा निर्विद्यमानेन विद्यमानेषु वस्तुषु ।
अतर्कि गन्धर्वपुरप्राकाराकारतामुना ॥ २

आचार्यायत्तमतिना पटुना कर्मठात्मना ।
एतेनाकारि कृतिना तत्कृत्यं पितुरन्तिमम् ॥ ३

दिनानि विधिना तेन तदा तानि निनाय सः ।
तथाध्यात्मविदध्यात्मकथया ताश्च शर्वरी ॥ ४

अथैष मङ्गलस्नातः सुवासाः सुपरिष्कृतः ।
चन्दनेनानुलिप्ताङ्गः सुमनोभिर्मनोरमः ॥ ५

पुरोहितप्रभृतिभिर्विहितस्वस्तिवाचनः ।
वित्तविश्राणनैर्विप्रान्विदधन्मुदितात्मनः ॥ ६

स्वनन्निःसाणनिस्वानपूरिताद्रिदरीमुखः ।
सुमुखः सैनिकैः स्वीयैः साकमास्थानमासदत् ॥ ७

अथ सम्प्रेषितचराश्चरास्तस्य तदन्तिके ।
सर्वमावेदयामासुर्वृत्तं रैङ्गिरिवार्तिनाम् ॥ ८

यस्य यद्यन्मतं तत्तद्भूतमित्येव ने पुनः ।
नोदिताः क्षोभिताशेषवृत्तास्तमिदमब्रुवन् ॥ ९

अभिषिच्य पदेऽमुष्मिन्राजाराम कुमारकम् ।
आसमुद्रं वसुमतीमवितारः स्वयं वयम् ॥ १०

इदमुद्दिश्य मनसा मयूराद्यैः कुमन्त्रिभिः ।
सन्दोहयद्भिः पृतनां वितीर्णोचितवेतनाम् ॥ ११

ससज्जे शम्भुवैराय ललज्जे न मनागपि ।
जनाः सर्वे वदन्तीमां किंवदन्तीं गृहे गृहे ॥ १२

द्विपि दिल्लीश्वरे दर्पाधुष्यमाने दिवानिशम् ।
न वरं बालिशो राजा सहास्यास्य वरं विषम् ॥ १३

क्रियावतामधिभुवे प्रभूतप्रभुतामुवे ।
हन्तामी स्पृहणीयाय स्पृहयन्ति न शम्भवे ॥ १४

इत्थं मयूरप्रभृतीन्विनिन्दन्त्यः पदे पदे ।
प्रजास्त्वाशासतेऽद्य त्वा शासितारं दिने दिने ॥ १५

शम्भुराजो नियन्तव्यो मन्तव्यो मन्तुमान्ध्रुवम् ।
अथवा हन्त हन्तव्यस्तत्र योधैरुदायुधैः ॥ १६

इत्यन्वहमह शुत्वान्[ श्रुत्वा ]मयूरादीन्प्रशासती ।
जागर्ति ममताप्युच्चैः पुत्रे स्वे ममतावती ॥ १७

सिंहासनस्य यो भर्ता स नो भर्ता भवेदिति ।
राद्धान्तितमिदं चित्ते तत्तद्दुर्गाधिकारिभिः ॥ १८

अस्ति हम्बीरराजस्य ममता ममतात्मजे ।
तदप्यतितमा पक्षपातस्त्वयि महाभुजे ॥ १९

उदन्तमेनमन्यच्च तेभ्यः श्रुतवताऽमुना ।
विविक्तवार्तिना मन्त्रनिधिना क्षात्रमूर्तिना ॥ २०

हन्त हम्बीरराजाय सेनान्ये शम्भुवर्मणा ।
अलेखि किल लेखोऽयं वर्णमुक्तामनोरम. ॥ २१

मयि राज्यमिदं न्यस्य वैरं दिल्लीश्वरस्य च ।
परोक्षभावमभजत्प्रत्यक्षः परमेश्वरः ॥ २२

पिता मम प्रतापी तत्कृच्छ्रं वाचामगोचरः ।
सुदुस्तरो ह्ययं कालः पापीयानुत्तरोत्तर. ॥ २३

भवितव्यं भवत्येवेत्त्वरगल्भ स्वया श्रिया ।
तदुपक्रम्य ते केन यत्र नास्ति प्रतिक्रिया ॥ २४

उपजापप्रवृत्तानाममात्यानां दुरात्मनाम् ।
मामुद्दिश्य जिगीषा यत्तत्रैव स्वजिजीविषा ॥ २५

दम्भोलिवद्भेद्यानां मदर्थे वः समुद्यमे ।
अहीनविक्रमस्याद्य भवत्येव भयं न मे ॥ २६

अनवाप्य भवत्पक्षं विपक्षास्ते ममाधुना ।
बत स्वाय निकेताय किमुत्पातं वितन्वते ॥ २७

प्रबुभूपति यः स्वेन प्रभुं चाभिबुभूपति ।
स राजानमजानानमितरस्तु न काङ्क्षति ॥ २८

शम्भुः कनीयसोऽमुष्य द्विपन्नेवेति किञ्चन ।
अज्ञापयन्नतीवाज्ञास्तन्मात्रेऽमी कुमन्त्रिण ॥ २९

प्रशास्ता त्वस्य राज्यस्य मद्दत्तस्यार्भकः स वा ।
अमर्पणामसौ ताम्राननाश्चेन्न जिघृक्षव ॥ ३०

राज्यं नार्जति राजानं राजैव तु तदर्जति ।
तृणवद्गणयन्त्येतत्केचित्तदतिगुर्वपि ॥ ३१

सद्यः शृङ्खलिता एव मयात्र निखिला खलाः ।
ते तु त्वया विभागे स्वे विनिग्राह्याः कुमन्त्रिण ॥ ३२

आहूय यवना नमव्रमाः स्वामिविद्विषः ।
मज्जयेयुरिमं सह्यमसह्ये मय्यमी रुषा ॥ ३३

येषां हि महती माया त्वमायाहि मदन्तिके ।
पालनायास्य राज्यस्य सेनानीः सेनया सह ॥ ३४

इदमानन्दराजाय योध्दे मानजिते तथा ।
प्रबोधनीयं भवता दो.प्रतापभृता मिथ. ॥ ३५

विसृष्टं शम्भुराजेन संश्रितप्रश्रया श्रिया ।
सेनापतिः स्वय लेखममु सम्यगलोकत ॥ ३६

मम त्वन्यत्र विज्ञाप्यमाज्ञया भवदीयया ।
द्रुतमागन एवास्मि सन्नद्धः सेनया मया[म] ॥ ३७

एवं सिंहासनार्हाय शम्भुराजाय सत्पृहः ।
सद्यः स्वेन जनेनैप सन्देशं समदेशयत् ॥ ३८

उदारमतिरानन्दराजाद्यैरनुमोदितः ।
अरोचदपि चामात्यचरं प्रच्छन्नवर्तिनम् ॥ ३९

लेखावलोकनाज्ज्ञातं मनमण्णमयूरयोः ।
विवक्षुरसि चेदन्यदपि तचेन वक्षि न ॥ ४०

अण्णाय च मयूराय प्रल्हादाय च राहवे ।
सद्यः सन्देशमेनं च मदीयं विनिवेदय ॥ ४१

तत्र तत्र समेष्यामि यत्र यत्रागमिष्यथ ।
पथिकीभूयतेऽस्माभिर्भवन्मुक्तस्य[केन] किं पथ.[था] ॥ ४२

सन्दिष्टमेतदथ ते सचिवाः समेताः
सेनापतिप्रहितमाशुचरान्निशम्य ।
रोद्धुं प्रणालमचलं प्रचुराभिमानाः
स्थानान्निजादुदचलन्वरवारणाणाः ॥ ४३

इत्यनुपुराणे सूर्यवंशे भिवास क० कवी० अध्यायः ॥

---

कवीन्द्र उवाच ।

अथ प्रस्थितमात्रस्य तुरगारोहणक्रमे ।
मयूरस्य शिरोवेष्टः पपात धरणीतले ॥ १

पिचिण्डिलस्य त्वण्णस्य याप्ययानाधिरोहिणः ।
निरुष्णीषो नरः कृष्णो दशोरभिमुखोऽभवत् ॥ २

अनाल्हादह्रदस्तावत्प्रल्हादस्य च गच्छतः ।
अमन्दमन्दं पस्पन्दे तत्र चक्षुरदक्षिणम् ॥ ३

तस्योपरिष्टात्सैन्यस्य व्यूढस्य प्रौढिमीयुषः ।
मण्डलान्यपसव्यानि गृध्रवृन्दैर्विदध्रिरे ॥ ४

एत्य दक्षिणतः स्फारमारटन्तः कटुस्वनम् ।
प्रजा सर्क्षप्रजाना चाप्यव्राजिषुरदक्षिणम् ॥ ५

निमित्तान्यशुभाशासीन्यमून्यन्यानि चाभितः ।
पश्यताथ मयूरादीन्प्रल्हादेनाभ्यधीयत ॥ ६

प्रल्हाद उवाच ।

भवन्ति हन्त नास्माकं शकुनाः शकुनावहाः ।
दशां द्रक्ष्यामहे कां नु बलिना कृतविग्रहाः ॥ ७

ममता मन्मता नैव ममताममतामते ।
यत्कृतेऽद्य प्रवृत्ताः स्थ पथि सद्भिरसत्कृते ॥ ८

एष व्रजामि दिल्लीन्द्रवाहिनीमवगाहितुम् ।
एष्यामि च पुनः स्वीय सह्याद्रिं सहसार्दितुम् ॥ ५५

मत्सन्देशमिम रनाय दुर्गपालाय शासत ।
अथवा शिवराजाय महाराजाय संसदि ॥ ५६

अमुष्योक्तिमिमां श्रुत्वा ययुस्ते च यथागतम् ।
प्रत्युद्ययुश्च दिल्लीन्द्रसैन्यानि तमुदङ्मुखम् ॥ ५७

सङ्गमे शम्भुना स्वेन सर्जेन स्वजनैः समम् ।
दलेलेन च सम्प्रेक्ष्य मुदेऽमुष्य निजम्बलम् ॥ ५८

समयः पूर्वमेवासीदयं शम्भुदलेलयोः ।
स्वस्वकार्यानुरोधेन मिथः सञ्जातसौहार्दयोः ॥ ५९

आडम्बराडम्बरेण दारिताम्बरग हरा ।
दिल्लीन्द्रसञ्ज्ञया नाम सा ननाम पताकिनी ॥ ६०

शिवराजसुत तत्र सर्वराजसु पूजितम् ।
बले बलेन सदृश कपाटपृथुवक्षसम् ॥ ६१

कृष्णसारसदृक्षाक्ष सुन्दराभमुखश्रियम् ।
पृथुभाल महाबाहु सभालङ्कारमुज्ज्वलम् ॥ ६२

वाचा मृदुतर वाचामाचारेण मनोहरम् ।
शिवराजात्मज वीक्ष्य राजा वज्र[व]दात्मज[जम्] ॥ ६३

साम्बन्धिकस्य सान्निध्यात्साम्यसम्बन्धमावहन् ।
अहयुरभिसङ्गम्य स्हीन स्हीत इत्यऽजनि ॥ ६४

शिवमित्र युधि भीम सम्यगुत्तीर्णभीम
प्रहितबलसमेत राजलक्ष्मीनिकेतम् ।
तमथ निरवहेल प्रेमशाली दलेल
श्रितहितनिजपथ प्रत्युदेति स्म सद्य ॥ ६५

बल्हसापचाररचनासुषमाश्रयाय
तत्तन्नृपालसमुदायचिरोपिताय ।
शम्भु निजाय शिबिराय मनोहराय
दिल्लीदिगन्तपतिचमूपतिरानिनाय ॥ ६६

अजनि हृदि यदीये कोऽपि हर्षोऽतिवेलः
स किल यवनसेनाधीशधुर्यो दलेलः ।
सपदि सदुपचारं कारयामास पार्श्वे
स्वशिबिरसमवेशं शम्भुसेनानिवेशम् ॥ ६७

सूर्यवंशे निवासकरकवीन्द्रपरमानन्दप्रकाशितायामध्यायशतसंमितायां-
शुभलक्षणलक्षितायां वैयासिक्यां संहितायामध्याय' । ।D

---

मनीषिण ऊचुः ।

अथार्थशास्त्ररीतीनां नीतीनामपि वेत्तरि ।
अभेत्तरि स्थितीनां च छेत्तरि द्विषि मर्मणाम् ॥ १

शुद्धेन यशसा दिक्षु विदिक्ष्वपि च विश्रुते ।
राज्याधिकारिणि सुते प्रथिते सुबहुश्रुते ॥ २

वञ्चयित्वा जनं सर्वं विषयात्स्वाद्विनिर्गते ।
चिन्तामणाविवाकस्मात्करात्कचन विच्युते ॥ ३

सिद्धमन्त्र इवोपेत्य दैवात्सपदि विस्मृते ।
अघनोऽर्थेऽप्यनीनस्य वीते वीताविरोद्वते ॥ ४

पोते सायात्रिकस्येव न तत्केनाप्यसंयुते ।
प्रतिकूलेन मरुता द्वीपाद्द्वीपान्तरं श्रिते ॥ ५

युक्तो मयूरप्रमुखैर्मन्त्रिभिर्मन्त्रवेदिभिः ।
शिवराजः कृती तत्र कमुपायमचिन्तयत् ॥ ६

स च शम्भुर्महाभागः प्रागल्भ्यमधिकं वहन् ।
अनहं यवने तस्मिन्नहंयुरपि विश्वसन् ॥ ७

अवर्तत यथा सोऽपि शम्भौ स्वां पुरमागते ।
परमानन्द तत्सर्वं शंस सम्प्रति नः प्रति ॥ ८

कवीन्द्र उवाच ।

सज्जनाद्रेर्विनिर्गत्य सपत्न्ये महाशये ।
सद्यः पौरन्दरीं शैलं प्रदर्शयितुमुद्यते ॥ ९

सन्धाय दिल्लीपतिना शम्भौ तन्नीवृत श्रिते ।
कर्तर्या कर्त्यमानेषु स्वेष्वन्त्रेष्विव कातर ॥ १०

वत्सलः सच्छलाम्लेच्छबलादतिबलाद्भयम् ।
तस्मिन्सम्भावयन्भूरि शिवराजोऽन्वतप्यत ॥ ११

शिवराज उवाच ।

मयाऽत्रधिया शम्भुर्नोपकण्ठे निवेशित ।
ससिद्धयैव विशुद्धात्मा न च कण्ठमर्णाकुल ॥ १२

मुधिना मन्त्रिभि. सर्वैर्मदीया शेमुषी तथा ।
स आत्मजो ममात्मेव सपत्नानाश्रयद्यथा ॥ १३

यदर्थं राज्यमेतन्मे स किमर्थं श्रितः परान् ।
नानुबध्नाति ह स्वार्थोऽप्यभिमानवतो नरान् ॥ १४

उत्सृज्य यः सिद्धमर्थमसिद्धं लब्धुमिच्छति ।
लब्ध्वापि स इम दैवात्सद्यस्तमिव हास्यति ॥ १५

यदसावतिवैयात्यावनाज्ज्ञातिवैरिण ।
अश्रयच्छ्रेयसे स्वाय तेन मे दूयते मन ॥ १६

आभ्यन्तरेण कलिना बलिना स उपप्लुत. ।
पश्यतो मे बलोद्वाय परात्कीर इवागमत् ॥ १७

स्वया बालतया तासु तासु लीलासु लालसन् ।
अहो अनागस त प्रत्यरोच परुष वचः ॥ १८

तत्तच्चिन्ताचयाम्भोधिवीचिविव्हलितात्मना ।
इत्थ ब्रतानुतेपे च तेपे च प्रभुणाऽमुना ॥ १९

अथ त स्त्रीयसाम्राज्यस्थितिनैश्चिन्त्यनीरधेः ।
सेतु सद्य समानेतु शक्तः प्रायतत प्रभुः ॥ २०

शम्भुरप्यनुभावेन स्वेन ता धुरमुद्वहन् ।
तृणायामन्यत तदा यवनानीकिनीगणम् ॥ २१

दलेल्रस्तु स्वय नीत्वा शिबिराय शिवात्मजम् ।
रह' प्राह महाबुद्धिः स्वासनार्धोपवेशितम् ॥ २२

दलेल उवाच ।

निधाय मयि विश्रम्भमायातोऽसि वरं कृतम् ।
गुरुणा त्वामनादृत्य स्व गौरवमनादृतम् ॥ २३

श्रेयसा भूयसावाप्य स्वसमान्नियमाशया' ।
अहंयुतायुताः केचिन्न सहन्ते सुतानपि ॥ २४

न मदीया. श्रिय किन्तु तावकीना इमा श्रिय ।
इह मावह सन्देह पुत्रादप्यसि मे प्रियः ॥ २५

न दानेन विना सम्पन्न शीलेन विना वधूः ।
न सत्येन विना वाणी राजते राजनन्दन ॥ २६

धन्वनाट विदर्भेश्च लब्धान्यानपि नीवृतः ।
प्रयच्छ प्रक्रियास्तास्ता क्रियाश्चाभिमताः क्रिया ॥ २७

महाप्रभुरिमा यस्मै सत्क्रिया त्वय्यविक्रियाम् ।
क्रियावति करोत्यद्य कार्यमार्य कुरुष्व तत् ॥ २८

त्वद्धिताय प्रवृत्तस्य यद्यपि स्यान्ममाहितम् ।
तथापि तन्महाबाहो मया सम्यगुरीकृतम् ॥ २९

आभिर्वाग्भिः प्रगल्भाभिः स प्रोक्तस्तेन वाग्मिना ।
समरोचत पीयूषसरःसहचरं वचः ॥ ३०

उड्डीय नीडात्स्वार्थाय जातपक्षा खगा यथा ।
पितु. सनीडात्क्रामन्ति तथा पुत्राः सुशिक्षिताः ॥ ३१

प्रवसेल्लब्धविद्यश्चेद्विधिषु' स्वाप्रसिद्धताम् ।
जानता गुरुणा तर्हि पुनः स निवार्यताम् ॥ ३२

वाहयित्वा धुर धुर्यं परीक्षन्ते परीक्षकाः ।
अस्य नैव गुणः किन्तु तस्य चित्तोरस्यसौ यतः ॥ ३३

येन लोकेन नाज्ञायि यथा दिल्लीपतिस्तथा ।
इह कर्तुमकर्तुं वा भवानेवाविभूः स्वतः ॥ ३४

लङ्घते किल कल्पान्ते मर्यादां मकरालयः ।
न तु जातु विलङ्घन्ते भारतीं स्वां भवादृशा' ॥ ३५

हितानामहितानां वा हितार्थं यः प्रवर्तते ।
तस्योपहतिरप्यस्य नाहित जातु जायते ॥ ३६

अहितीभूयते येन हितस्य हितकारिण ।
द्रुह्यन्ति घुसदस्तस्मै कृतघ्नायापकारिणे ॥ ३७

स्वत्त सर्वमताभिज्ञे त्वयि विज्ञापना तथा ।
स्फटिकैर्घटिते सौधे दह्यमाना सुधा यथा ॥ ३८

इमा दलेलः सरसाममुष्य वाणीमुदारा मनसा विमृश्य ।
भूयासि भूपालमणे शिवस्य श्रेयासि मेने स्थगितश्चिरस्य ॥ ३९

अथैप तस्मै द्विरदास्तुरङ्गान्
दिल्लीश्वरेण प्रहितानुदग्रान् ।
शृङ्गारितान्स्वाभरणोपपन्नान्
समर्पयामास कृतोरुमान ॥ ४०

त त प्रपद्य परिबर्हमनेकमर्हं
सम्भावितानि विरदानि च तानि तानि ।
सद्यो दलेलविनियोजितसन्निवेश
शम्भुस्ततो निजमियाय चमूनिवेशम् ॥ ४१

इद्मनुपुराणे सूर्यवशे निवास० अध्याय । ११

---

कवीन्द्र उवाच ।

ततो दिने दिने तत्र शम्भुराज प्रतापवान् ।
अनुसारविद्. सारवत. पर्वतवत् स्थिरान् ॥ १

सत्वरान्स्वामिकार्येषु पद्भ्यामपि च गत्वरान् ।
तत्तद्वेतिधरान्धीरान्धुरीणान्धुर्यकर्मणि ॥ २

ससत्रकान्परिज्ञातानभिज्ञातान् यशस्विन ।
उदारप्रकृतीन्भव्याकृतीनविकृतीन्कृती ॥ ३

समग्रहीत्सङ्ग्रहार्थी सैनिकान्सप्तिसादिन ।
शिखाशदोजसां येषा विशिखा' शब्दवेधिन ॥ ४

अभ्याहवाभिमानिभ्य फलविभ्य स्मयोद्धता ।
असु पर्यचरस्तत्र पत्तिचम्व सहस्रश ॥ ५

सत्वन्वह मदोन्मत्ते भद्रजातौ मतङ्गजे ।
शृङ्गारिते मदोदग्रे समग्रानीकमध्यगे ॥ ६

दल्लेन सहासीन पीनस्कन्ध सुलोचनः ।
नमतो नमयन्मौलीन्यवनानामनेकशः ॥ ७

मुष्णन्तेजांसि सर्वेषा जिष्णुप्रतिमविक्रम · ।
गृह्णन्प्रणाम केषाचित्काश्चित्पश्यन्कृपादृशा ॥ ८

हसन्कैश्चिद्विलासेन कांश्चित्कुर्वन्कथा मिथः ।
स्वननेन सम साक्षात्सुधासहचरोत्तम ॥ ९

अश्ववर्गैर्वरैस्थै · प्रासपट्टिशपाणिभि · ।
अनुगतो महाशूरै · शक्रोऽमरवरैर्यथा ॥ १०

अन्यान्यायुधजातानि तानि तानि समन्ततः ।
सज्जीविधाय धावद्भिः पुर · परिजनैरलम् ॥ ११

वृतो महोदग्रधामप्रधानै प्रधनोद्धतैः ।
अनुगतो विनीतात्मा महाराजात्मज · कृती ॥ १२

सैन्यमध्येऽतिशुशुभे षण्मुख सुमुखो यथा ।
तदा दल्लेलः प्रोद्दिष्ठभुजधामसमुन्नत ॥ १३

शम्भुराज समुद्वीक्ष्य वचन किञ्चिदब्रवीत् ।
सुवर्णघटित चेतोहारि पीयूषसुन्दरम् ॥ १४

शक्रप्रस्थैकशक्रेणावक्रेण प्रधनप्रथ · ।
प्रार्थितस्त्व महाराजासदा सह्यमुपद्रुतुम् ॥ १५

स्वायत्तीकर्तुमप्युच्चैस्त्वद्दहस्तेन केवलम् ।
दातु महाधिपत्य च स य किञ्चि पुनस्तव ॥ १६

त्यक्तलोकैकवृत्तस्य ममतामोहितात्मन · ।
शिवराजाधिरा·य च प्रशासतु पुनर्भवान् ॥ १७

स कर्म वाप्यमत्कर्म कर्तव्य विजिगीषुणा ।
कीर्तिर्योध्यपरीर्तिर्वा यथा स्याच्चाश्वनीः समा ॥ १८

राजरात दशमुखोऽग्रज पितृमम स्वयम् ।
पराजित्यामर्हाद्धर्षां शक्रानङ्कमिवार्जिताम् ॥ १९

सत्वम·े युराग्रो राम दशरथा मजम् ।
पराजित्य स्वजनक राज्यश्रियमवापतु · ॥ २०

उद्यमेन विना नास्ति विक्रमो विक्रम विना ।
सिद्धि सिद्धि विना ख्यातिर्विना ख्याति महद्यश ॥ ३४

महद्यशो विनाऽस्य जगन्न जगतो विना ।
रति प्राज्यैस्साम्रा यपदवी नानुभूयते ॥ ३५

त्व समृद्ध समिद्धाग्निप्रतापस्तपनोज्ज्वल ।
वर्धिष्णुजिष्णुरोचिष्णुरामाराम इवापर ॥ ३६

पृथुकोदण्डनिर्मुक्तकाण्डमण्डलताडिता ।
हृदि निद्रा दिवा रात्रौ न ते गच्छन्ति दुर्हृद ॥ ३७

भवप्रतापसन्तप्तस्तपन प्रतिवासरम् ।
निमज्जन तनोयेव साय साय सरित्पतौ ॥ ३८

भवत्कीर्त्या परिवस्त कुमुदाधिपति क्षयम् ।
प्रतिमास कृष्णपक्षे सङ्गच्छति नृपात्मज ॥ ३९

भवतो विश्वविजयप्रख्यातबलशोभिन ।
अरातिना भ्रुवमपि च सहेताहित चरन् ॥ ४०

लोभादिविष्टै सचिवैर्ममताहृतचेतस ।
पितुस्त्व कलिवातस्य पद समाधास्यसि ॥ ४१

स्वभावयेति सम्भाष्य दलेलो गर्वकुञ्जर ।
अतिमात्र धनुस्ताय यथा तत्रैम्बक[त्रैय्यम्बक] धनु ॥ ४२

स्वर्णपृष्ठ भारसह कमनायतराकृति ।
शार्ङ्ग हरेर्यथा शार्ङ्ग स्वर्णबिन्दुविचित्रितम् ॥ ४३

लसद्गुण वीरमनोहारि दारुणदारुणम् ।
कारण शौर्यसम्पत्तेर्युद्धरङ्गविभूषणम् ॥ ४४

सारण बलमत्ताना परवारणवारणम् ।
हसत्तु कोटियुगलाग्राभ्या स्वर्णहिमाचलौ ॥ ४५

विधात्रा विहित किन्तु मेरुविन्ध्याद्रिणो[?]त्वम् ।
तुलनाय महारत्नभूत नूनतम श्रिया ॥ ४६

अथ चकार जिज्ञासुर्मन्त्र तस्य महामन ।
कुरु सज्ज राजपुत्रे पुत्रैर्गोचमरोचन ॥ ४७

माधवैकसहायेन सुराधिपतिना बलात् ।
हतो वृत्रो विचित्राणि चरित्राणि कृतानि च ॥ ६२

वह्निमात्रसहायेन रुद्रेण मदनः पुरा ।
स्निग्धमुग्धतनुर्दग्धोऽसाधि कीर्तिर्दिगन्तरे ॥ ६३

विभीषणसहायेन सौमित्रेयेण धीमता ।
जीविनाद्भ्रंशितो मेघनादो बत मदोद्धत ॥ ६४

अनलेनानिले सख्य मुख्य सम्भाव्य सर्वदा ।
दन्दह्यते वन घोरमसह्यममरैरपि ॥ ६५

खाण्डवे पाण्डव लब्ध्वा सहाय कृष्णमच्युत ।
अवरोत्ताण्डव वह्निराखण्डलमहेल्यन् ॥ ६६

अरुण सारथिं कृत्वा भास्करेण प्रभाभरै ।
व्यापिता भुवनश्रेणा नि श्रेणा श्रेयस कृता ॥ ६७

चतुर्भिर्भ्रातृभि सार्धं द्रुपदाद्यैर्नराधिपै ।
लब्ध्वा साहाय्यक धर्मराजो राज्यमथावरात् ॥ ६८

बृहन्नडासहायेनोत्तरेण प्रविजानता ।
विजिता कौरवा सर्वे भीष्मद्रोणपुर सरा ॥ ६९

देवसनासखि वेन विशाखेनाखिलाहित ।
तारको निहितो सङ्ख्ये मुख्येनामित्रघातिना ॥ ७०

पुष्पवद्भ्या सुधापाने राहुर्वैह्नमदोद्धत ।
घातितो विष्णुचक्रेण वक्रदैत्यविदारिणा ॥ ७१

सन्ध्यामात्रसहायेन नृसिंहेनासुरद्विषा ।
हिरण्यकशिपोर्वक्षा दारित नखरै खरै ॥ ७२

इ यादि[वि] चिन्त्य हृदये दिल्लीश्वरचमूपति ।
कल्पद्रुमिव राज्याथा श्रितोऽस्मि भवदाश्रयम् ॥ ७३

मनोरथा मदाया ये ते सिद्धा इति भावये ।
पथ्यामुतथ्यानुजवदवादास्व यतो गिरम् ॥ ७४

तथ्यपथ्यस्य को लोके वक्ता स्यात्वां विना मम ।
त्वमेव मित्र मित्राभतेज पुञ्जसमुद्धरम् ॥ ७५

जनकेन विहीनोऽस्मि ममताग्रस्तचेतसा ।
वैमात्रेयेण शनिना विदूरमभिलक्षितः ॥ ७६

मयूरादिप्रभृतिभि प्रजाविप्रकारिभि ।
राक्षसैरिव दुष्प्रेक्ष्यैर्दूरादृष्टै कुमन्त्रिभिः ॥ ७७

जननी मोहममताग्रस्तापि चमूपते ।
कलिगौरवतो यहि तहि पूज्यतमा मम ॥ ७८

प्रजानामेवकारणाद्दयन्दमयितु बलात् ।
शासितु सचिवान्सेनापतीन्स्तेयादिमोहितान् ॥ ७९

मदीयमेव तद्राज्य तत्र क स्याद्भ्रमो मम ।
केनचिद्धेतुना सेनापतेः सत्यमुदीरितम् ॥ ८०

जनकानन्तर राजा ज्येष्ठपुत्रो भवयुत ।
पण्डिता कथयन्त्युच्चैर्देशे देशे सभास्वपि ॥ ८१

अह ज्येष्ठो गरिष्ठश्च बन्धभिर्बहुभिर्गुणै ।
महाराजस्य पदवीमह भोक्ता गुणाकरः ॥ ८२

त्वसहायेन दिल्लीन्द्रप्रसादेन मयाऽधुना ।
देशदुर्गाणि बहुधा पत्तनानि सहस्रशः ॥ ८३

साधयिष्ये दिवारात्र रिपूणामिति चिन्तये ।
इति लालप्य त तत्र दलेल शम्भुभूपतिः ॥ ८४

महावीररसावेशाञ्चितपुलकनूरुह ।
बभौ सूर्य इव श्रीमान् राजपुत्रो महाद्युतिः ॥ ८५

ततो मौनमुपागच्छद्विचक्षणविचक्षण ।
कुमार इव तेजस्वी कुमार शिवभूपतेः ॥ ८६

श्रुत्वा दलेल सम्भ्रमकल्पवर वच ।
औरङ्गशाहसन्देशार्थदूतानन्वस्मरन् ॥ ८७

महाप्रेमभरारम्भ दर्शयन्वचमाचिरम् ।
अस्तुवच्छम्भुनृपति पाणिनोपिरमाददत् ॥ ८८

दिने दिने गजारूढो श्रीदलेलशिवात्मजौ ।
कथयन्त [न्तौ] कथा इव दिनानि नयनचिरम् ॥ ८९

औरङ्गशाहसन्देशाद्विजयन्तपुर प्रति ।
प्रस्थानमकरोच्छम्भुमवे कृत्वा चमूपति ॥ ९०

भूपालदुर्गदुर्धर्षं शिवराजस्य धीमत ।
शम्भुराजकरेणोच्चैरभिमर्द्यात्मसात्कृती ॥ ९१

अन्यान्यपि च दुर्गाणि राजपुत्रपुरःसर ।
अकरोत्स्वकरस्थानि सुस्वस्थानि धनादिभि ॥ ९२

इत्थ शम्भुनृपो दलेलकटकाग्रे सञ्चरन्सर्वदा
युद्धक्रुद्धनिरुद्धराजपटलीं निघ्नन्कृतघ्नानपि ।
त भूपालगड क्रुधा विकथतामानीय मानी स्वय
धीर सान्द्रकृपाम्बुधि समधिक प्रेम्णा दलेलेऽर्पयत् ॥ ९३

योद्धा योद्धा समिद्धानलसमविलसच्चण्डबाहुप्रतापो
निर्दग्धारातिरण्य समधिकधिषण शूरसेनाशरण्य ।
सानन्द नन्दनन्दप्रतिमनवयशस्तोमसोमोदय श्री
पश्यन्दिल्लीन्द्रसेनापतिमतिमहितो राजसूनुश्चकासे ॥ ९४

भूपालादिगडा कुडा अपि तथा श्रीशम्भुसाहाय्यत
स्वायत्तीरचिता अनीकपतिना श्रीमद्दलेलेन यत् ।
तत्संश्रुत्य विचिन्त्य विक्रमभर चित्तेन नन्दोच्चकै
र्दिल्लीन्द्र शिवभूमिपालविषये नृयानि तेने कलि ॥ ९५

इति विहितजयश्री संश्रितो वारसङ्घै
समधिकपदबन्धैर्मागधै स्तूयमान ।
शिवनरपतिपुत्रश्चारुचञ्चच्चरित्र
प्रतिसमरमजस्रं द्योतते स्मातिदृप्त ॥ ९६

किल कलिरपि भूयो वीक्ष्य वृद्धि स्वकीया
निजहृदि बहु मेने मोहपूर्वप्रधानान् ।
कृतमिति बत कृत्य भावयन्भव्यभावै
रधिकनमविलास सम्भ्रमेणाजहर्ष ॥ ९७

तत्तत्कार्यपरम्पराविरचनाद्दुर्दान्तसम्मर्दनाद्
वीराणा परिपालनाद्भुजबलात्तत्तत्कलाकल्पनात् ।
श्रीशम्भो करुणाकटाक्षविभवाच्छ्रीमान् शिवस्यात्मज
शम्भु प्रेष्ठतमो बभूव सतत दिल्लीन्द्रसेनापते ॥ ९८

इत्यनुपुराणे सूर्यवंशे निवासकरकवीन्द्रपरमानन्दकृताध्याय । १२

---

मर्नापिण ऊचु ।

अथ भूपालदुर्ग च पितुर्न परिपालितम् ।
बत तद्वर्ति चानीक शम्भुना विश्वसीकृतम् ॥ १

स तु शम्भु शिवस्योचै सुत सर्वजनस्तुत ।
अस्रोचदनर्हं तत्प्रतिभाति न वस्तुत ॥ २

स हि तत्र स्वय कर्तुमकर्तुं चाखिल प्रभु ।
अकरोदसदकर्म क्रूर तत्केन हेतुना ॥ ३

कवीन्द्र उवाच ।

पत्तिसेनापतिर्यावत्तावदेत्य शिवात्मज ।
बलेदमादिशद्दूतो द्वास्थ ग्रामाधिकारिणम् ॥ ४

दूत उवाच ।

नोदग्रता गिराप्रस्मिन्नच सैन्यसमग्रता ।
द्विषन्निग्राहकेऽमुष्मिन्दले चेयमुदग्रता ॥ ५

दलेल सत्यसन्धोऽय निहत्य त्वा ससैनिकम् ।
गुरुरोषो गिरेरस्य शस्त्राणि करिष्यति ॥ ६

उचित तद्युञ्जन्ति स्वामिनोऽर्थाय जीवितम् ।
अन्यथा तु स्वय स्वाय बलानर्थाय केवलम् ॥ ७

अतो दुर्गमिद मुञ्च श्रयासु च महाप्रभुम् ।
अल युद्धेन ते मन्द बल निजमपश्यत ॥ ८

रामसिंहस्य तनय कृष्णसिंह सुदुर्धर ।
जगसिंहमुखाश्चान्ये राजपुत्रा प्रतापिन ॥ ९

श्रामाननूपसिंहश्च पद्मसिंहश्च विश्रुत ।
तथैव केसरीसिंह कर्णसिंहसुता इमे ॥ १०

अमुना शिवराजस्य महाराजस्य सूनुना ।
साधव साधुना सार्द्धं हृद्य हार्दमदीधरन् ॥ ११

अमी स्वभावतस्तत्र यद्यच्चक्रे स उद्धत ।
ततस्सोढ दलेलेन परा वृद्धिमुपेयुषा ॥ १२

शूरा' क्षरदसृक्पूरा क्षितिं दूरादरञ्जयन् ।
शीर्यमाणशिरस्कन्धस्फूर्परक्षसा ॥ ४०

आरुह्यारुह्य सश्लिष्टतटा सन्नद्धकङ्कटा ।
वारा केऽपि तदोत्तालास्तारा इव निरेजिरे ॥ ४१

सोढ्वाभ्यापतता पातानश्मना पृथुवर्ष्मणाम् ।
क्रुधा महायुधा केचिदधिगत्याप्यधित्यकाम् ॥ ४२

खदिराङ्गारगर्वेण स प्रकर्षेण तत्क्षणम् ।
भस्मता प्रत्यपद्यन्त पश्यता पार्श्ववर्तिनाम् ॥ ४३

अथ घोरैर्महावीरैर्गिरिदुर्गावलम्बिभि ।
महत स्वामिनाऽर्थाय जीवित मोक्तुमुद्यतै ॥ ४४

केषुचित्पात्यमानेषु पातितेषु च केषुचित् ।
विद्रावितेषु विद्राव्यमाणेष्वपि च केषुचित् ॥ ४५

गाढवर्मा तदा शम्भुवर्मा चर्मासिभृत्स्वयम् ।
धन्विभिर्गदिभिर्वीरै प्रासिभिश्चन्द्रहासिभि ॥ ४६

त्रिशूलिभिर्मुद्गरिभिर्गोणिभिर्वारबाणिभि ।
मानिभि सहितो मानी शम्भुराजोऽनुयायिभि ॥ ४७

अधिरुह्य घर सद्यस्तदा क्रुद्ध इवान्तक ।
युध्यमानो विरुद्धाना व्यदधात्कदन महत् ॥ ४८

अल भिया धियाऽलम्भि निभिय वो महायुधा ।
द्विषतोऽमून्निगृह्णीत सङ्गृह्णीत यशो युधा ॥ ४९

इति शम्भुवच श्रुत्वा विद्रवतो न विद्रुता ।
विद्रुतास्तु परावृत्य पुनर्युद्धाय सहृता ॥ ५०

स धन्वी धनु धुन्वानस्तन्वान शरमोक्षणम् ।
विपक्षान्क्षपयन्नैक्षि दुर्लक्ष पार्थवत्क्षणम् ॥ ५१

स तेषा युध्यमानाना समानाना क्षुरादिभि ।
पार्ष्णीन्पाणीन्कफोणींश्च तथान्त्राणि त्रिकाणि च ॥ ५२

पृष्ठीन्पृष्ठान्यदस्थीनि सक्थीनि च भुजा स्फिज ।
क्रूरकर्मकृता तेषा पृथक्पृथगथाकरोत् ॥ ५३

शूरा क्षरदसृक्पूरा क्षितिं दूरादरञ्जयन् ।
शीर्यमाणशिरस्कन्धकरकूर्परवक्षसा ॥ ४०

आरब्धारब्ध संश्लिष्टतटा सन्नद्धकङ्कटा ।
वारा केऽपि तदोत्तालास्ताग इव विरेजिरे ॥ ४१

सोद्व्राभ्यापतता पातानश्मना पृथुवर्ष्मणाम् ।
क्रुधा महायुधा केचिदधिगत्याप्यधि यत्नाम् ॥ ४२

खदिराङ्गारवर्णेन स प्रकर्षेण तत्क्षणम् ।
भस्मता प्रत्यपद्यन्त पश्यता पार्श्ववर्तिनाम् ॥ ४३

अथ धारैर्महावीरैर्गिरिदुर्गावलम्बिभि ।
महत स्वामिनाऽर्थाय जीवित मोक्तुमुद्यतै ॥ ४४

केषुचित्पात्यमानेषु पातितेषु च केषुचित् ।
विद्रावितेषु विद्राव्यमाणेष्वपि च केषुचित् ॥ ४५

गाढवर्मा तदा शम्भुवर्मा चर्मासिभृत्स्वयम् ।
धन्विभिर्गदिभिर्वीरै प्रासिभिश्चन्द्रहासिभि ॥ ४६

त्रिशूलिभिर्मुद्गरिभिर्बाणिभिर्वारवाणिभि ।
मानिभि सहितो मानी शम्भुराजोऽनुयायिभि ॥ ४७

अभिरत्य घर सद्यस्तदा क्रुद्ध इवान्तक ।
युध्यमानो विरुद्धाना व्यदधात्कदनं महत् ॥ ४८

अल भिया धियाऽलम्भि विमिय वो महायुधा ।
द्विपतोऽमून्निगृण्हीत सङ्गृण्हीत यशो युधा ॥ ४९

इति शम्भुवच श्रुत्वा विद्रवन्तो न विद्रुता ।
विद्रुतास्तु परावृत्य पुनर्युद्धाय सहता ॥ ५०

स धन्वी धन्व धुन्वानस्तन्वान शरमोक्षणम् ।
विपक्षान्क्षपयन्नैक्षि दुर्लक्ष पार्थवत्क्षणम् ॥ ५१

स तेषा युध्यमानाना समानाना क्षुरादिभि ।
पार्ष्णीपाणीन्कफोणीश्च तथान्त्राणि शिराणि च ॥ ५२

पृष्ठीपृष्ठावदस्थीनि सर्वाणि च भुजा स्फिज ।
मूरवर्मकृता तेषा पृथक्पृथगपाकरोत् ॥ ५३

इत्थं राजकुमारेण कुमारेणेव कुप्यता ।
शक्रारिषु समग्रेषु दुर्गरक्षेष्वनेकशः ॥ ५४

इषुभिः शकलीकृत्य पातितेषु समन्ततः ।
स्वप्रदेशेष्विवाशेषेष्वपि नष्टेषु विन्हल ॥ ५६

अपह्नुत्याचलादस्मादकस्मात्क्वापि निर्गते ।
सफलं स्वस्य गर्वस्य फलं प्राप किरञ्जित् ॥ ५७

प्रध्वनल्लोलकल्लोला कल्यकर्दमदुर्गमा ।
क्रूराकारा तदापारा प्रससारासृगापगा ॥ ५८

आप्लुता सकुतुकं सहदारैर्नीरलोहिततरङ्गवतीषु ।
मदसा मसृणितानि तदानीमाशुराशु पिशितानि पिशाचाः ॥ ५९

इत्थमेनमचलं युधि जित्वा शम्भुरेव विजयी पृथुसत्त्वः ।
साहसीसमुदितैर्मुदितैः स्वैः सैनिकैः सह दलेऽन्वदलत् ॥ ६०

इत्यनुपुराणे कवीन्द्र अध्यायः । 13

---

*श्रीगोविन्द । कवीन्द्र उवाच ।

वन्दारुविबुधोदारमौलिमन्दारदामभिः ।
विचत्पदारविन्दाय गोविन्दाय नमो नमः ॥ १

पुरोहितप्रभृतिभिर्वेदवेदाङ्गवेदिभिः ।
अनूचानैः प्रवचनैर्मन्त्रविद्भिश्च मन्त्रिभिः ॥ २

श्रौतेन विधिना सम्यगभिषिक्तः शिवो यदा ।
बभातुर इवानीव कालात्मा कलिस्तदा ॥ ३

कैलासवासिनं देवं गिरीशं तेजसां निधिम् ।
भालस्यहुतभुग्लीलालीलाप्लुष्टमनोभवम् ॥ ४

क्षणध्वस्तान्धकध्वान्तं त्र्यम्बकं त्रिपुरान्तकम् ।
स्वभावसिद्धविभवं भवं भवभयापहम् ॥ ५

भीमभव्यभयाकारमुग्रमप्यतिसुन्दरम् ।
अनादिमादिं सर्वस्य इतिहासमर्मीश्वरम् ॥ ६

जगदेकगतिं भूतपतिं मृत्युञ्जय मृडम् ।
शङ्कर सर्वलोकाना शङ्कर प्रलपद्यत ॥ ७

अथ कल्पद्रुमलतामण्डपान्तर्निवेशिते ।
पूर्णेन्दुम *

भि ।†

आवेद्यमानजनन स्वर्णवञ्जुलपाणिभि ॥ २४

द्वितीयमिव कैलासमधिकैलासमास्थितम् ।
दिदृक्षुर्दिविपद्लोकविलोकितमलोकत ॥ २५

दवीयानेव देवाय नन्दिना स निवेदित ।
सन्दानिताञ्जलिपुट प्रणनाम पुर स्थित ॥ २६

अथो गदितुमाज्ञप्त शर्वेणोन्नमितभ्रुवा ।
स तस्मै स्ववितिर्निर्वेदहेतुमाचष्ट तवत ॥ २७

कलिरुवाच ।

यदत्तपूर्वं भवता मह्य माहेश्वर युगम् ।
उदभूदधिभूस्तत्र मदन्य इति किं कृतम् ॥ २८

पुराराते प्रसन्नेन यदुक्त म पुरा त्वया ।
पश्य सर्वज्ञ भगवन् राजते तदवज्ञया ॥ २९

अनेन सा नैषधेन पर्यपालि यथा पुरा ।
अनेन सा तथा शाहसुतेन परिपाल्यते ॥ ३०

उच्चै सुकृतिनानेन कृतिना कृतिभिर्युगम् ।
कृतमेवावारि यदा गति क्वाऽपि न मे तदा ॥ ३१

महाकालस्य ते रूप काल एव सनातन ।
वसरान्तो निमेषादिश्चक्रवद्यो विचेष्टते ॥ ३२

आब्रह्मस्तम्बपर्यन्त यत्र लोका पुन पुन ।
भूत्वा भूत्वा प्रलीयन्ते समुद्र इव वीचय ॥ ३३

यत्र ब्राह्म्य[ह्म]मह सर्वे मनूनामन्तराणि च ।
युगान्येतानि च पुन पुनरायान्ति यान्ति च ॥ ३४

---

* Here the portion up to verse 23 is missing which probably covered two pages

† Disconnected pages 2 and 3

यस्य य समयस्तस्मि-स वर्तेत यथाविधि ॥ ३५

कृते युगे चतुष्पादस्त्रेतायां तु त्रिपादभूत् ।
द्वापरे तु द्विपाद्भूत्वा धर्मः क्षमामवतिष्ठते ॥ ३६

स एकपात्पुनस्तिष्ये तिष्ठन्नपि न तिष्ठति ।
त्रिविना विहितास्तेषां धर्मस्यास्य व्यवस्थिति ॥ ३७

प्रमथ्नाति प्रमत्तात्मा तामिमां प्रमथस्तव ।
यत्र प्रशासति महीं धर्मस्यैवास्ति दीक्षित ॥ ३८

हेमसिंहासनासीनो हेमाचल इवापर ।
महाबाहुर्महाराज शम्भुराजो व्यराजत ॥ ३९

जामदग्न्येन रामेण बलिना दानवेन च ।
कल्पद्रुमेणापि च यच्चिरस्य निरकारि न ॥ ४०

दैन्य द्विजातिजातीनां तदनेन दयालुना ।
प्रददानेन वित्तानि तदा द्रुतमपाकृतम् ॥ ४१

पुरोहितास्तथाचार्या ऋत्विज श्रोत्रिया अपि ।
तत्तत्कर्मण्यभिकृतास्ततोऽन्यऽरि च सूरय ॥ ४२

आसमुद्रावनीभागवर्तिनो येऽवनायका ।
धनदेनामुना सर्वे ते तदा धनदीकृता ॥ ४३

महोदयादहो तस्माद्दानशौण्डाद्ययाचत ।
प्राप पञ्चसहस्राणि य पञ्चाशदयाचत ॥ ४४

स्वर्णरत्नादिवासांसि गोतुरङ्गमतङ्गजान् ।
अजानिक्रमदाच्छम्भूराजो राजसभास्तुत ॥ ४५

स्वागलीलामुदवहत्तथा तस्य प्रभो शय ।
यथा निपश्चिना लेप्सु[लिप्सु]गृहेषु स्वर्णराशय ॥ ४६

दिल्लीन्द्रप्रभृतिप्रतीपपृतनावस्कन्दनास्कन्दन
स्पष्टस्कन्दसमानमानमहस सम्पन्नधर्मस्थिते ।
भूलोकैकगते सदाशिवदयोदञ्च प्रभुत्वोन्नते
शम्भुच्छत्रपते सदोदितमिद साम्राज्यमुद्योतते ॥ ४७

इत्यनुपुराणे सूर्यवंशे निवासरम्यकवीन्द्रपरमानन्दप्रकाशितायामन्यायशतसम्मितायां
शुभलक्षणलक्षितायां वैयासिक्यामध्याय ।।५

शम्भुराज उवाच ।

जिता मया सहायेन रिपवो युद्धदुर्मदा ।
कर्बूरा इव दु साध्या श्यामला सफिरङ्गिण ॥ १०

इङ्ग्रजाश्च वलन्देजा आरब्या यवनै सह ।
पुरुगालैश्च नित्या शूरा परिजिता पुन ॥ ११

सागता फेरपद्मामागता शरणार्थिन ।
रानडूस्रा कराबन्धा मदाज्ञापरिपालिन ॥ १२

शिरस्त्रा शार्णसन्नलविक्रमा विगताक्रमा ।
तुरुष्किका शुष्कमुखा दिगन्तारण्यमाश्रिता ॥ १३

वैजापुरीया साहाय्ये याचयन्ति बल मम ।
भागानगरनाथोऽपि नाथते मद्या सदा ॥ १४

समस्तपातशाहाना मूर्ध्नि यो मान्यविक्रम ।
आरङ्गशाह एषोऽसौ निश्चिदर्पं वहत्यहो ॥ १५

सिद्दीमारा मद्भटाटोपनिराक्षणभयातुरा ।
स्वमाहुतेजा नि दन्तो ददत्यास्रभूस्रान् ॥ १६

चिननाथिराजाय विग्रासितपरा अपि ।
आहोपुरविरा काञ्चित्र वहन्ति ममामत ॥ १७

दोणारा प्रणयप्रहा बन्हाम्यपविसर्जिता ।
मद्भक्तिमनुगच्छन्ति प्रयच्छन्ति धन बहु ॥ १८

परासिन समाख्याता विख्याता सङ्गोष्वग्म् ।
मामनै सनै शूरै सागरा तरचारिभि ॥ १९

बसुरुमङ्गुर*[बसुरमङ्गुर]चिनमोचगोमन्तपालजा ।
वसया[ई]चौन्सुरतगरालीमस्कतोद्भवा ॥ २०

---

10 After 10 ab R ins
सद्ना शूद्रिमाधैव स्वमहाये समागता ।

11 1 R यवरा अपि (for यवनै सह)

12 R om 12 c 13 b

15 R om 15 ab

16 d R दन्तयन्ति बराघुट ।

17 R om 17-22
R om 33 c l

N B *बसुरमङ्गुलचिन Basur Mangalore and China are ports The original in the copy does not suit the metre

चेनपट्टणघोगारभडोचदिरभूभरा ।
मोवासमुम्बयों[ ई ]मोसम्बजादत्रणसम्भरा ॥ २१

महोसदा सिंहलजा नागाजद्वीपजा भटा ।
वदयन्ति खड्गटोपादास्य मम महोत्कटम् ॥ २२

गिरिकन्दरसञ्चारा भिल्ला मल्ला इयोद्धता ।
मत्प्रथा प्रथयन्त्युच्चैर्वचसा मनसापि च ॥ २३

पुण्डा प्रचण्डदोर्दण्डकण्डूताण्डवखण्डिता ।
अखण्ड खण्डशो दासभावमाकल्पयन्त्युत ॥ २४

सदा मदभरोदग्रा पाल्गारा प्रहारिण ।
सन्दानिताञ्जलिपुटास्तिष्ठन्त्यजिरके मम ॥ २५

मामक कटक वीक्ष्य काटका कठिना अपि ।
मामेवाशु प्रपद्यन्ते शरण गल्तितोद्यमा ॥ २६

साष्टासमाश्रया वारदेशस्या केऽपि भूभुज ।
समालभन्ते नो निद्रा मत्प्रतापाग्नितापिता ॥ २७

सौनूरवासिन केऽपि नरेन्द्रप्रवरा खरा ।
मोगला मद्भटैर्भूय प्रगृहीता गलग्रहे ॥ २८

पञ्चाग्निरस्तपरपराक्रमतामागतास्थिरम् ।
समुद्रतीरसञ्चारा आभीरा॰ सरनोन्मुखा ॥ २९

निन्दुराश्रयसञ्जातप्रतापप्रथितत्विष ।
अहो प्रयच्छन्ति कर भीता मद्भटसङ्करे ॥ ३०

सोधेरग नृपश्रेष्ठा जङ्गमा परमोद्धता ।
प्रपूजयन्ति मामेव हिन्दा पादाम्बुजद्वयम् ॥ ३१

---

२१ d R नित्यन्ति ममाङ्गने ।

२६ d R शरणार्थिन (for गल्तितोद्यमा )

२७ cd R मत्प्रतापाग्निसन्तप्ता निद्रा नोपलभन्त्युत ।

२८ b R वरा शूरतरप्रभ ।

२९ c R —सरधाना (for—समारा)

३० ab R बिन्दूरावयसम्पानप्रतापाग्निमहोज्ज्वला ।

केचिद्दुर्गमदुर्गेषु नरसिंहाः प्रहारिणः ।
माता शशकवच्छन्नाश्चान्त्यन्तर्हिता इव ॥ ३२

चञ्चीचञ्जावरपुरप्राकारान्तरवर्तिन ।
मदीया एव सम्भूता प्रभूतधनतोषिता ॥ ३३

विलक्षणा कोङ्कणका प्रतिक्षणमहर्निशम् ।
सुलक्षणाऽभ्यसन्ति मद्भटाना समागमात् ॥ ३४

नानेमावल्का केऽपि शूरा परविडम्बका ।
मदग्रेसरिणो भूत्वा धावन्ति बत दासवत् ॥ ३५

तथा पौवनमध्यस्था प्रशस्ता सङ्गरेष्वलम् ।
वीरा प्रवीरा दुर्गाणि रक्षन्ति च हितङ्करा ॥ ३६

खेटेश्वरगता वीरा वरा राजन्यमूर्धसु ।
मदाश्रयात्स्वाश्रमेषु विश्रमन्ति श्रियावृता ॥ ३७

वीराकीर्णतरव्रातावृत वीरातमावलम् ।
येऽवलम्ब्य बतोत्तसा भूभुजा तेऽनुयायिन ॥ ३८

[32] a R अतिदुर्गमदुर्गस्था —After 32 R ins
फरासिन समाक्रान्ता विक्रान्ता सङ्गरे दृढम् ।
मामके सकले शूरै साग[रा]न्तरचारिभि ॥
त्रिनेत्राधिवरशाय विन्नासितपरा अपि ।
आहोपुरुषिकां काश्चिन्न वहन्ति ममाग्रत ॥
दुर्लोला कलिता शेषपाखण्डा खण्डमुकण्ठम् ।
आददन्ति विनादेन चलन्तो मामका इति ॥
बोग्भावा प्रणयश्च वङ्गालवविवर्तिता ।
मद्भक्तिमनुगच्छन्ति प्रयच्छन्ति धन बहु ॥

[33] After 33 ab R ins
मन्क मामक वीक्ष्यारम्भस्यानन्दगम्भूता ।
कर्द्दीना दीनवक्त्रा सदने मद्भय सदा ॥
विशेषयात्त विरता सिन्धुमार्गादनेकधा ।

[35] cd R मदग्रेसरता प्राप्य धावन्ति विनमन्ति च ॥

[36] After 36 R ins
पौहसारैरनिन्द्या सत्वया मण्डिते सदा ।
भरत्स धनमासाद्य प्राणानुज्झन्ति सङ्गरे ॥

[37] R om 37 44

देशमुख्या खोपडा ये वृद्धरोहिडसास्थिता ।
जोधरग परे बालरोहिडेखोरवासिन ॥ ३९

केचिद्ये ल्वणावासा सदा समरलालसा ।
कान्दखोरसवासा भानुप्रतिमतेजस ॥ ४०

मोसेखोरगृहा पर्लीवारणूतारलखोरजे ।
कोयिनातारजा केचिज्जोरचाम्पलखोरिण ॥ ४१

इन्दापूरसिरोल्स्था बारामतिजुनारजा ।
नारातटी पुण्यवायी[ ई ]सासवाडक्षुपेश्वरा ॥ ४२

मानगोकर्णमिरजमनोल्हावागलादिषु ।
देशेषु येषु ये भूपा मदाज्ञा मानयन्त्वरम् ॥ ४३

चाकणग्रामसम्भूता किराता नीरभाषिण ।
आकिरन्ति कर द्वारापान्त बद्धवराश्चिरम् ॥ ४४

मूठेखोराल्या पौडखोरभूप्रभविष्णव ।
म पक्षमनुरक्षन्त क्षिण्वन्त्यहितमण्डलम् ॥ ४५

मूल्सीवरस्थितागुञ्जणसारासाश्विनोडिजा ।
मदायेन प्रभावेन कुर्वन्ति भुवने यश ॥ ४६

---

[45] R reads

मूठेखोरगृहा केऽपि भग्न प्रोत्कम्मानिन ।
आशसयन्ति मद्दस्तादन विजयमेव च ॥

[46] ab R मूलसारस्थिता प्रोथयालनामसमधिता ।

d R रमन्ति स्त्रीस्वदवे –After 46 R ins

केचिद् गुञ्जणसवासा सुभग रणकर्कशा ।
मद्वाभता गता सन्त प्रकुर्वन्ति यशो भुवि ॥
तथा हरणमध्यस्था परेषा हरणोद्यता ।
मदाशाविङ्करा सर्वे निवसन्ति सुख गृहे ।
तथा हीरडसस्थाना मदाश्रयमुपागता ।
भूदुर्गाण्यनुरक्षन्ति रक्षयन्ति हितं मम ॥
पाण्डखोरकृतावासा प्रवासैकृतभगा ।
मदाश्रय संश्रयन्तो भजन्ति शिवमुत्कटम् ॥
भूय परल्सारस्था अध्यनो मम सङ्गता ।
जैत्रयात्रा प्रकुर्वन्ति प्रेक्षन्ति सभास्वलम् ॥

कुडाळग्वोरे प्रखरास्तथा हेटकुडाळके ।
अभिख्यां कामपि मम प्रेष्याः प्रख्यापयन्त्यहो ॥ ४७

भूपा हीरडसोद्भूताः प्रभूताभिजनप्रियाः ।
मञ्जैत्रयात्राः कुर्वाणाः प्रोल्लसन्ति पदे पदे ॥ ४८

फोडेकराः सालसीकाश्चान्देरीसाङ्खलीकराः ।
मणेरीमर्दनगटहेरेकरनिवासिनः ॥ ४९

वाडीडिचोलीनगरे ख्याताः सगरवद्गुणैः ।
राजपूरसमावेशाः परे सौदालजा नृपाः ॥ ५०

पांमूपत्तनभूमिस्था वरा लाञ्जेकरा अपि ।
देवलग्रामसम्भूता देवरूखभवाः परे ॥ ५१

सङ्गमेश्वरभूभूता दामोलीदर्पदर्पिताः ।
सावर्डेकरनामानश्चिपोलणभवास्तथा ॥ ५२

फुणगूसट्टतावासा धामणेकविलासिनः ।
हातखाम्बेकराः केचिन्मत्ताः केळेकराभिधाः ॥ ५३

---

तथा तारलखोरस्थाः शूरा केचन सम्मता ।
मत्पत्तिसेना पतिता भान्ति प्राप्य क्षितौ किल ॥
मेढेगोराश्रयाः प्रायः प्रकर्तुं प्रसभोद्यताः ।
मत्पत्तिमन्यपार्श्वस्थाः प्रस्थाने प्रभवन्त्युत ॥

[47] b R. खराशुरिव रश्मिभिः ।

[48] R om 48

[49] b R तथा हेटकुडालकाः—After 49 R ins :
शृङ्खलाकरसयुक्ताश्चान्देरीग्रामवासिन ।
मत्पत्तिसेनावासाङ्गमङ्गीकुर्वन्ति सङ्गरे ॥
अन्ये वारुणखोरस्था रोहिडेखोरजैः सह ।

[50] d R. तथा सौन्दलजा अपि ।

[52] b R सावर्डेकरजा दृढ—After 52 ab R ins
प्रपालयन्ति दक्षाङ्ग सेनाया मम सर्वदा ।
चिपोळणभवाः केचिद्दामोलीप्रभवास्तथा ॥

[53] After 53 R ins
सालसीपत्तनगृहाः केचिद्वेलेकराः सदा ।
पुत्रपौत्रैः परिवृता शूराग्र्यपदवीङ्गताः ॥
अवन्ति मम सेनाया दक्षवामकरावपि ।

कल्याणप्रान्तसञ्जाता भीवण्डीजनुष परे ।
श्येनग्रामभवा केचित्तथा खानवलीयका ॥ ६०

नानादेशसमायाता प्रवीरा वीरमण्डले ।
सुबेदारा नायकाश्च जुम्लेदारा सहस्रश ॥ ६१

हवालदारा प्रख्यातास्तथा सर्णोबता अपि ।
[ए]काकिन परे केऽपि केऽपि बन्धुसुहृद्वृता ॥ ६२

डिचोलीकन्वाडस्था शिनेश्वरनिवासिन ।
आङ्कोलेकरनामानस्तथा बाधेकरा अपि ॥ ६३

कुलशीलावृता सर्वे शस्त्रपृथुविक्रमा ।
मदीयपत्तिसेनाया जनयन्ति मुखश्रियम् ॥ ६४

---

महागापञ्चभरिता कानडीयप्रथा गता ।
वामकूर्परता यान्ति मत्सैन्यस्य रणोत्सवा ॥
आरलग्रामनिरयास्तारन्यसमानया ।
सोलाङ्कुरीया साङ्मूलभवा शालवनीयका ॥

60 d R राशिवडकरमिश्रिता —After 60 R ins
वामकुर्परतामस्मत्सेनाया कल्पयन्त्युत ।
प्रेङ्खस्कन्धिन केचित्काम्का षण्मुखोद्यमा ।
वामकुक्षिं दक्षकुक्षिं पालयन्ति बलस्य मे ॥
प्रवरा प्रथिता खानवलीग्रामसमुद्भवा ।
मत्सैन्यमध्यस्थेनाभिनादयन्ति दिशो दश ॥
मदीयसेनानेत्रभाभरं बिभ्रति सर्वदा ।
नानाभूदुर्गरक्षितमध्यया कूरमानसा ॥
मदीयसैन्यकणाभा दीपयन्ति मदान्वता ।

61 R cm 61 ab

62 After 62 R ins
अगन्ति मम सैन्येऽस्मिन्नानादेशसमुद्भवा ।

63 After 63 R ins
स्वस्वविक्रमसन्दीप्ता शश्वत्प्रथिता परम् ।
मत्सेना प्रपदस्याना धातन्त निजतेजसा ॥
वर्गेदनसमाख्येसप्रगमाधिपगोद्यमा ।
हस्तका स त म भूयाध्वनगुणोत्तनोत्तमा ॥

64 R cm 64

पण्डाताण्डवनिष्णाता गीष्पतेः समताङ्गताः ।
रचयन्ति श्रियं काश्चित्सभासु मम पण्डिताः ॥ ६५

अथर्वेण इवाथर्वरहस्यपरिशालिनः ।
लसन्ति ब्राह्मणा ब्रह्मविदः सर्वत्र कर्मसु ॥ ६६

चतुर्वेदविदः केचित्त्रिवेदीपारगामिनः ।
द्विवेदाध्यायिनः केचिदेकवेदरताः परे ॥ ६७

श्रोत्रियाः स्नातका मौनव्रतिनो जापका अपि ।
तापसा जटिलाः केचिद्वल्कलाजिनवाससः ॥ ६८

यायजूका योगविदो दीक्षिता अग्निहोत्रिणः ।
अयाचितव्रता ब्रह्मचारिणश्चोर्ध्वरेतसः ॥ ६९

अधोमुखा ऊर्ध्वमुखा जीर्णपर्णाशनास्तथा ।
शीर्णपर्णकृताहारा उञ्छवृत्तिरता परे ॥ ६८

पञ्चाग्निसाधना वायुभक्षका धूमभक्षका· ।
तोयाहाराः फलाहाराः कन्दमूलाशना· पुन ॥ ६९

नानावेषधराः केचिज्जटिला मुण्डिनोऽपि च ।
त्रिदण्डिनः केऽपि लसत्त्रिजटा द्विजटा अपि ॥ ७०

उलूखलमुखाः केचिद्गोमुखा गोमयाशनाः ।
गोमूत्रप्राशनाः केचिच्छाकाहाराश्च केचन ॥ ७१

रामानुजा वैष्णवाश्च तत्तमुद्राङ्किता अपि ।
शुद्धमुद्राङ्कितैः सौरैः शाक्तैर्गाणेशकैः सह ॥ ७२

---

68 R cm 68 cd

70 R cm 70 cd

71 After 71 R ins
कृशा अपि दिनेशाभप्रभाभरविलासिन ।
मत्कल्याणपरा सर्वे तिष्ठन्ति मम सद्मनि ॥
मन्त्रयन्त्ररहस्यज्ञास्तान्त्रिका मा- का अपि ।
समुदायैः समुदय मत्सभासु गम[द]न्त्यमी ।
षड्दर्शनरहस्यज्ञाः प्रशस्ता· सद्कथास्वपि ॥
आवेदयन्ति सतत मत्कल्याणपर विधिम् ।
गणि[ण]का गुणिन· केचिद् गणितग्रहमण्डला ।
वल्गन्ति दैवं बहुशः सभासु मम सुव्रताः ॥
R cm 71-73 d

शैवे· केचिद्दक्षविद्भिर्मान्त्रिकैस्तान्त्रिकैर्वृता: ।
मुनयो यतय: केचित्प्रसन्नमतय: सदा ॥ ७३

सिद्धा: सिद्धिसमृद्धार्था गणकैरनुगामिना: ।
चिन्तयन्ति ममाभीष्टं निरुपद्रवसश्रया: ॥ ७४

केऽपि कार्मणवेत्तार: परकृत्यानिवारका: ।
आभिचारान् परकृतान् वारयन्ति मम प्रिया: ॥ ७५

पुराणा ब्राह्मणा: केऽपि पुराणार्थप्रकाशका: ।
पौराण्य: प्रथिता गाथा कथयन्त: सभास्थिता: ॥ ७६

अलङ्कारविद: केऽपि धिषणापतिधीभरा: ।
आलोपयन्ति वाग्जालैर्मामक मानस मुहु: ॥ ७७

तर्कशास्त्रैकपठनात्कर्कशास्तार्किका जना: ।
रञ्जयन्ति महोद्ग्राहै: समाजे मानसं मम ॥ ७८

पूर्वोत्तरा च मीमासा पठित्वा केऽपि धीवरा: ।
समर्थयन्ति सार्थेन स्वार्थान् स्वार्थपरायणा: ॥ ७९

महाभाष्यप्रवक्तारश्छेत्तार: सशयस्य च ।
प्रदर्शयन्ति धात्वर्थान्नानारूपान्ममाग्रत: ॥ ८०

महाकाव्यकलालापललिता: कलिताऽखिला: ।
आभूषयन्ति परममास्थानीस्थानमास्थिता: ॥ ८१

चतुर्दशसु विद्यासु शिक्षिता दीक्षिता अपि ।
विवदन्ति मिथो वादै: स्वमतस्थापनस्थिरा: ॥ ८२

चतु षष्टिकलातत्त्वपारगा कुलभूषणा ।
विशेषयन्ति मद्रङ्गे परस्परजिगीषव ॥ ८३

---

[74] R cm 74 ab
[75] After 75 R read 84-89
[76] d R कथयन्ति ममाग्रत ।
[77] b R धिषणापतिबुद्धय ।
[78] b R कर्कशत्वमुपागता –d R समाज मम तार्किका ।
[81] ab R नानाकाव्यकलालापकोविदा कविनायका· ।
[81] cd R आभूषयन्ति परम समाज मामक सदा ।
[82] R transfer 82 83 d R स्वमतस्थापनोद्धुरा ।
[83] R cm 83 cd

नास्त्यापिर सर्वासु चिकित्सासु विचक्षणा ।
आयहति श्रिय कांश्चिमामका रोगहारिण ॥ ८४

व्यायामशिक्षका केचि सम्भ्रमे सम्भृता सदा ।
यत्र काश्चिद्रहम ये दीपयति ममामत ॥ ८५

गान्धर्वविद्यासारस्य वेत्तारो दर्शका अपि ।
गायन्ति गायना गाथा सुस्वरा वैणिकै सह ॥ ८६

मार्दङ्गिका पाणिवादा लयाकलपनपण्डिता ।
भाण्डै सह महारङ्ग रञ्जयन्ति मनो मम ॥ ८७

नाट्य[ नाट्य ]ज्ञानाभिज्ञतमा सदाऽहम्मनिवर्जिता ।
नटति विनटन्त्युच्चैर्नटा केचन तारणे ॥ ८८

आभङ्गुरात्मश्रीभरा स्तनभैरम्भ् ।
नृत्यति वारवनिता सनत्या सन्तो रगा ॥ ८९

विचित्रचित्ररचनाचतुराश्चतुलोत्तय ।
चित्रकाराश्चित्रयन्ति सचित्रा मद्गृहान्तरम् ॥ ९०

कारव कारुशास्त्रार्थवेत्तारश्चारुकुण्डला ।
सुरेन्द्रभवनाकारान् रचयन्ति मम [ गृ ]हान् ॥ ९१

परीक्षका परीक्षाभिर्रहीभी रत्नसञ्चयान् ।
परीक्षन्ति स्वपुल्लभ्या दक्षिणाधारलक्षणा ॥ ९२

नयविनयमयुक्ते सतत सत्यवादिन ।
वणिग्जना प्रकुर्वन्ति मत्पुरे गतमीतय ॥ ९३

तुरङ्गवाहनोद्युक्ता केऽपि तुरङ्गमा ।
हेषन्ति नृत्यन्त इव चत्र यामिकै सह ॥ ९४

गन्धमदा सदोद्रमेगा केऽपि मतङ्गजा ।
गर्जन्ति घनगम्भीरमविरऽगनिदारणा ॥ ९५

---

[83] After 83 ab R ins
कल्याण चापर सर्व दशयन्त ज्यन्काय ।

[88] a R ननाट्यकल्पिता ।

[89] d R रात्य मम मन्दिरे ।

[92] ab R परीक्ष्या न मर्त्य वस्त्र्य सहित्य ।

रथिभिः सयुताः केचिदङ्गगेऽमी महारथाः ।
विभान्ति भानुप्रतिमास्तेजोभिर्मेत्रियङ्करा ॥ ९६

मया दत्तानि देवेन्द्रा पितृभि सहिताश्चिरम् ।
हव्यकव्यानि गृह्णन्ति तिन्वन्ति मम प्रियम् ॥ ९७

इत्थमापूरितो गौर्या शङ्करेण मनोरथ ।
तथापि जागर्ति मयि चिन्तानन्ता बनागता ॥ ९८

कथ सुतो मम भवे प्राज्यसाम्राज्यकारणम् ।
सुधाकरा समास्तारा प्रविचार्यार्यसम्मता ॥ ९९

कानुष्ठानस्य रचना पुरश्चर्याऽथ का पुन ।
प्रकर्तव्या मया नून सप्रधानाः समन्त्रिण ॥ १००

इत्थ शम्भुनृप प्रगल्भविभव शात्रश्रिय भर्त्सयन्
शम्भ्वाराधनसाधनोऽपि तुलजासर्वस्वभूत पुन ।
पुत्रेहा मनसा वहन्निजसमास्ताराश्रिगयोच्चकै
स्तूष्णीमास सतृष्ण एव नियत देव्या समाराधने ॥ १०१

इत्यनुपुराणे सूर्यवशे परमानन्दात्मजदेवदत्तोद्भवप्रकाशिताया शुभलक्षणलक्षिताया शिवपुराणान्तर्गतायामनेकाध्यायसाधिताया वैयासिक्यामशावनगणे राजाधिराजशम्भुराजोक्तिर्नाम अध्याय ।

---

97 a R देवा अपि मया दत्तम् ।

98 R reads for 98
इत्थ मनोरथोऽस्माक शङ्करेण प्रपूरित ।
तथाप्येका कापि चिन्ता मयि जागर्ति साम्प्रतम् ॥

99 cd R सर्वे ब्रूत सभास्तारा प्रविचार्य स्वके हृदि ।

100 cd R कार्या मया वा वदत प्रधानमन्त्रिभि सह ।

101 c R पुत्रेहां मनसा वहन् ।
–d R देव्या समाराधने ।

करीन्द्र उवाच ।

इत्थं निगद्य धरणीपाले शिवसुते तदा ।
तूष्णीम्भूते सभास्तारा परस्परमुखेक्षणाः ॥ १

छन्दोगामात्यसहिताः सोपाध्याया सयोगिन ।
शिवयोगिनमत्यर्थं पुरस्कृत्य तपोनिधिम् ॥ २

अमुनन्वचनैश्चारुचमत्कृतिनिधायकैः ।
एकचित्तामता गत्वा शृणुत द्विजसत्तमा ॥ ३

मन्त्रिण ऊचु ।

भो राजन्यकुलोत्तस चिन्ता मा कुरु सर्वथा ।
आपूरितार्थनिचया योगनिद्रा हरेः पराम् ॥ ४

परावरैकसिद्धीना दात्रीं पात्रीं सुखस्य च ।
दमिताशेषदैत्येन्द्रमण्डला मङ्गलालयाम् ॥ ५

तडित्कोटिप्रतीकाशतेजोभरविराजिताम् ।
पञ्चाशद्वर्णनिलया सुरूपा मदमन्थराम् ॥ ६

मदघूर्णितरक्ताक्षीं योगियोगैकगोचराम् ।
चराचरस्य निर्माणकारिणीं शङ्करप्रियाम् ॥ ७

शक्तीनामपि सर्वासामाद्या वन्द्या विशेषत. ।
वेद्या समस्ततन्त्रौघैर्मन्त्रसङ्घप्रवर्तिनीम् ॥ ८

भक्तकुलैकवरदा दरदा दनुसन्ततौ ।
दयान्विता सदोद्दामपाखण्डदमनोद्धुराम् ॥ ९

मुक्तामणिप्रघटितमायूरोद्भासिनासिकाम् ।
ताटङ्कयुगलीभूतभानुराकेशभासुराम् ॥ १०

---

3 d R तच्छृण्वन्तु मनीषिण ।

4 c R आराधयस्व तां कालीम् ।

6 b R तेजोभरतरङ्गिणीम् ।

-c R सद्रूपां (for निलयां)

9 b R दनुजेषले [ष्वर्‍] (लौ ?) (for सन्ततौ) R cm 9 cd

10 R transp 10 ab and 10 cd After 10 R ins
कुचकुम्भसमाकारतुहिनस्वर्णपर्वताम् ।

सोपाध्यायैर्द्विजश्रेष्ठे सिद्धैरन्यैर्मुहुर्मुहु ।
सम्वर्धितोऽल्प वाग्जालैर्मानिभव्यसमन्विते ॥ ३१

शिवराजात्मज शम्भू राजराजसम श्रिया ।
आनन्दसिन्धुलहरीनिमग्न समजायत ॥ ३२

ततोऽस्तुत्या स्वमनसा काली स्वीयामुपासनाम् ।
आमन्त्रोदर्कसम्पर्क प्रसन्नवदनो नृप ॥ ३३

मनीषिण ऊचु ।

यतीन्द्र काली या प्रोक्ता सर्वशक्त्युत्तमोत्तमा ।
तस्या स्वरूप किं ब्रह्मन्किं वीर्यं को मनु स्मृत ॥ ३४

का पूजा विधि यन्त्र क काल सिद्धिसाधने ।
यद्यस्ति करुणा चित्ते कथयाशु समासत ॥ ३५

तथैव सिद्धि सर्वत्र परमा शिवयोगिन ।
स्थानजन्मभवा काश्चिद्वद त्व ललिताक्षरै ॥ ३६

गणेशभट्ट को नाम कोऽसूरेशानभट्टक ।
एतया प्रकृति मह्य प्रधाना वक्तुमर्हसि ॥ ३७

अगण्यपुण्यचरितश्रवणे चन कौतुकम् ।
नवीनानि वरीवर्ति स्पृहा भो कविनायक ॥ ३८

इति पृष्ट कविश्रेष्ठ सभ्यमेन मनीषिभि ।
रहस्यमपि हर्षाज्जगाद वदतां वर ॥ ३९

कवीन्द्र उवाच ।

मनीषिणः सावधाना श्रृणुध्व चरित महत् ।
पुण्य पवित्रं परम काव्या श्रोत्रसुखावहम् ॥ ४०

आसीत्पुरा धरा सर्वा सलिलेन परिप्लुता ।
योगनिद्रामयो विष्णुर्योगनिद्रामदीधरत् ॥ ४१

वटस्य पत्रस्य पुटे शयाने पुरुषोत्तमे ।
तदा तत्कर्णमलजौ प्रभूतबलदर्पितौ ॥ ४२

मधुकैटभनामानौ दानवौ साधुगर्हितौ ।
दैवेनाविष्टहृदयौ कालयन्त्रनियन्त्रितौ ॥ ४३

आस्फोटयन्तौ स्वभुजौ तृणीकृत्य जगत्त्रयीम् ।
महामदभरोदग्रौ द्रोहोद्रिक्तसमेधितौ ॥ ४४

अकस्मादिव सवृद्धौ कालानलसमद्युता ।
प्रतीतौ विश्वविजये परस्परहितैषिणौ ॥ ४५

एकाशाविव सर्वस्वभूतौ दनुजसन्तते ।
उन्मत्तौ क्रोधरक्ताक्षौ विष्णुनाभिकृतालयौ ॥ ४६

महाकापट्यभरितौ चरितौ बलिना वरौ ।
धातारमत्तुमालोलौ विरेजाते मनस्विनौ ॥ ४७

ततो विधाता तौ वीक्ष्य भयाकुलितमानस ।
निद्रामुद्राङ्कितो विष्णु' किं कार्यमिति चिन्तयन् ॥ ४८

क्षण तूष्णीं समास्थाय प्रविचार्य स्वके हृदि ।
अत्यर्थमस्तुवत्स्तोत्रैर्योगनिद्रामनुत्तमाम् ॥ ४९

---

44 d R समर्धितौ ( for समेधितौ )

46 b R दनुकुलेष्वल ( for ° जसन्तते )

46 d R कृतालय ( for लयौ ) 47 R Transp 47 ab and 47 cd

47 b R प्रवलौ ( for चरितौ ) cd R धातारमत्तुमुद्युक्तौ स्ववीर्यभरशालिनौ ।

48 After 48 ab R ins

अस्तुवन्मनसा तत्र योगनिद्रामनुत्तमाम् ।

कान्तिस्त्वमेव किल कान्तिसमूहभाजां
दैवं त्वमेव वत दैवसमेधितानाम् ।
राज्यं त्वमेव परितप्ततपोधनानां
मातः प्रसीद परिपालय मामनाथम् ॥ ६०

ख्यातिस्त्वमेव परमासि सुलक्षणानां
विद्या त्वं नयवतां विनयोज्ज्वलानाम् ।
हासस्त्वमेव कलिताद्भुतविस्मयानां
मातः प्रसीद परिपालय मामनाथम् ॥ ६१

नाट्यं त्वमेव नटन नटनायकानां
लास्यं त्वमेव सुभगं गणिकाजनानाम् ।
लज्जाऽसि काऽपि सकला कुलकामिनीनां
मातः प्रसीद परिपालय मामनाथम् ॥ ६२

विश्वेश्वरी त्वमसि विश्वविनोदशीला
दुःशीलदारणकरी शरणागतानाम् ।
नारायणी त्वमथ पालनचारुलीला
मातः प्रसीद परिपालय मामनाथम् ॥ ६३

माया त्वमेव भुवनत्रयमोहिनी त्वं
विश्वात्मनानमपि भुवनानि भूयः ।
स्वीयोदरे वहसि बालमुकुन्दमूर्तिं
मातः प्रसीद परिपालय मामनाथम् ॥ ६४

वृत्तिर्निवृत्तिभरिताथ जनप्रवृत्ति
क्षान्ति क्षतिश्च परिसन्नतिरुन्नतिश्च ।
प्रीतिर्दितिश्च सुमति कुमतिस्त्वमेवा
मात प्रसीद परिपालय मामनाथम् ॥ ६५

स्फीति स्थितिश्च विनतिर्लघुता च भीति
स्फूर्तिश्च कापि निकृति प्रकृतिश्च काचित् ।
कृत्य कृतिश्च निकृति परमाकृतिस्त्व
मात. प्रसीद परिपालय मामनाथम् ॥ ६६

यज्ञास्त्वमेव सन्त्वा यजन त्वमेव
दीक्षाव्रता रुचिचमत्कृतिदाऽथ दीक्षा ।
शिक्षाव्रतामपि सता प्रमिता तितिक्षा
मात प्रसाद परिपालय मामनाथम् ॥ ६७

रक्षा भयाकुलितमानसमानवाना
भिक्षा च भिक्षुकजनस्य नरस्य माया ।
सिद्धि समृद्धिसहिता गृहिणा गृहस्था
मात प्रसाद परिपालय मामनाथम् ॥ ६८

अस्त्र तवैव बत रूपममोघवार्य
शस्त्र च शास्त्रमपि नाटकभाणजातम् ।
सङ्गीतगीतमपि वाद्यमथासि नादो
मात प्रसीद परिपालय मामनाथम् ॥ ६९

65 R cm 65 66
67 b R सौदामिनी वज्रधरी त्वमेव ।
c कान्तस्त्वमेव सुमुखो रमणी त्वमेव ।
After 67 R ins
अस्त्राणि शस्त्राणि च ते स्वरूपम् ।
शास्त्राणि नानार्थमतोक्तानि ॥
कीर्तिस्त्वमेव सुमति कुमतिस्त्वमेव ।
मात प्रसीद . ।
68 R cm 68 74

निद्रामयी त्वमसि मुद्रितलोकदृष्टि
स्वप्नः प्रशस्तिमर्सिता प्रथितस्त्वमेव ।
बोधः प्रबोधममयेऽप्यथ का तुरीया
मातः प्रसीद परिपालय मामनाथम् ॥ ७०

देव्या त्वया प्रविततानि विभान्त्यमूनि
भव्योज्ज्वलानि भुवनानि विजृम्भितानि ।
सर्वस्य सर्वमसि वर्धितशर्वगर्वे
मातः प्रसीद परिपालय मामनाथम् ॥ ७१

कारुण्यकन्दलितकान्तिभरं कटाक्षं
ये तावकीनमनवे समुपालभन्त ।
ते दुस्तराण्यनुतरन्ति भरन्ति भाग्यैः
रम्ब प्रसाद परिपालय मामनाथम् ॥ ७२

लिप्सावनीप्सितनतार्ति परिपूरयन्ती
जागर्षि विश्वरव्ये बलिनालिर्यीना ।
एवापि शङ्करवधूरवधूतपापा
मातः प्रसीद परिपालय मामनाथम् ॥ ७३

प्रौढा प्रगल्भधिषणा अपि ये सुधीरा-
स्त्वामीरयन्ति परमामृतहेतुभूताम् ।
भूयो भजन्ति न भजन्ति जनुर्जनन्या
मातः प्रसाद परिपालय मामनाथम् ॥ ७४

इत्थं स्तुता भगवता विधिना विधात्री
नानाविधैः सरभसं नमिता च भूयः ।
सम्प्रार्थिता भगवता वरदा तदानीं
विष्णुं मुमोच सहसा करुणार्द्रमूर्तिः ॥ ७५

मुक्तस्तया निभृतनामसमस्तपयोधे
विष्णुः प्रसन्ननयनो दनुजालिजिष्णुः ।
महायुधेन युयुधे किल पद्मदिव्य
साहस्रवर्षसममोघपराक्रमोऽपि ॥ ७६

---

[75] d R प्रादुर्बभूव पुरतः करुणार्द्रचित्ता ।

[76] a R परमनामक (for निभृत°)

तौ मायया वत तमोगुणया विमुग्धौ
दृप्तौ तदोचतुरिदं वचनं विचित्रम् ।
तुष्टा वयं मुररिपो वरमावृणीष्व
युद्धस्य[द्धेन]तेऽप्यन[ल]मनेन विकल्पितेन ॥ ७७

वाक्यं समाकर्ण्य वरेण्यनाम्ना
प्रयाचितौ मृत्युपथाय दुष्टौ ।
अथोचतुस्तौ जलहीनभूमा
वावां जहि त्वं मधुकैटभारे ॥ ७८

अङ्के ततः श्रीरमणो गृहीत्वा
तौ दानवौ स्वीयसुदर्शनेन ।
जहार तेषां हृदयस्थजीवं
शिवं पदं प्रापयिषुः प्रणामम् ॥ ७९

आविष्णोः प्रभविष्णुनामथ समावीक्ष्योच्चकैर्भूजल
तेजोवायुयुतं नभश्च सुषमां दध्रेऽधिकां कामपि ।
चक्रुस्तोत्रशतैः स्तुतिं विधिमुखा भक्त्या प्रणामक्षणा
बध्वा हस्तसरोरुहाणि विनयान्नानाप्रणामानपि ॥ ८०

विरचितशुभकीर्तिं काऽपि मूर्तिं शिवाया
नलिनसदनचित्तावाञ्छितं पूरयित्वा ।
तदनु झटिति लीलान्तर्हिताभूत्प्रभूत
प्रथिततमगुणश्रीः आजनित्री त्रिलोक्याः ॥ ८१

इत्यनुपुराणे सूर्यवंशे निवासकरपरमानन्दात्मजदेवदत्तद्विजगोविन्दकवीन्द्रप्रकाशितायां शिवपुराणान्तर्गतायामनेकाध्यायसाधितायामंशावतरणे कालीप्रभावनिरूपणमध्यायः ॥२॥

---

77 d R युद्धेन तेऽप्यलमनेन विकल्पितेन ।

78 R आकर्ण्य वाक्यमिदमाशु जनार्दनेन सयाचितौ मृत्युपथाय भूयः ।
तावूचतुस्तोयविहीनभूमावावां जहि त्वं मधुकैटभारे ॥

79 a R स्वके (for ततः)

80 a R प्रभविष्णुता हृदि (for °विष्णुनामथ)
c R प्रणामोत्सवा (for °मक्षणा) d R बध्वा हस्तसरोरुहावलिमथो नाना प्रणामानपि ।

वनीन्द्र उवाच ।

अथोऽभिधास्ये परम मन्त्र तत्र प्रगोपितम् ।
वराङ्गमिव सर्वेषा गोप्य प्रविदुषामपि ॥ १

स्वय कृतमिवात्कर्म जननीजारगर्भवत् ।
कन्यासम्भोगवत्पुम्भिर्भगिन्या परिभोगवत् ॥ २

अभक्ष्यभक्षणमिव मित्रद्रव्यापहारवत् ।
गोप्य सर्वप्रयत्नेन पण्डितेन मया यथा ॥ ३

नाशिष्याय कदा ब्रूयान्न शठाय कदाचन ।
न दाम्भिकायाकृतिने न च नष्टोद्धताय च ॥ ४

यदि ब्रूयात्प्रमादेन देवताशापमाप्नुयात् ।
तस्मै कुप्यन्ति योगिन्य सोऽनर्थ सुमहान्स्मृत ॥ ५

पद्मभूर्वह्निमारूढो मालिनाकलितान्तर ।
द्विजराजकृतात्तसो बीजमेतत्त्रिवारत ॥ ६

ये पठन्ति कविश्रेष्ठास्ते ज्येष्ठा कविमण्डले ।
सिद्धि पारमिका यान्ति दक्षिणाया प्रभावत ॥ ६

हर सरक्षण च द्वभूषित द्वि प्रयाजयेत् ।
जपकाले सधिषणाविषणा परिमर्दयेत् ॥ ७

शूली त्रिवेदा ललितो लक्ष्मारामेशराञ्चित ।
यो द्वि स्मरति शत्रू स क्षिपत्यतिपराक्रम ॥ ८

वस्त्रान्ते क्षेत्रमयो ज्ञान विष्णुसमन्वितम् ।
आमा दार्घकृतावासो धरा स्मरविराजिता ॥ ९

---

1 b R मन्त्र सर्वोत्तमोत्तमम् । After R ins
य जप्त्वा साधकश्रेष्ठो व्रजत्सिद्धिमनुत्तमाम् ।
-R omits 1c 5d

6 For 6 R subst
ब्रह्मवह्निसमारूढ कलायुक्तचन्द्रशेखर ।
बीजमेतन्मन्त्रहार्थे पञ्चार्थो त्रिवारत ॥

7 a R व्योमरक्षणयुक् (for हर सरक्षण)
cd R बीजयुग्ममिद प्रोक्त भुक्तिमुक्तिफलप्रदम् ।

8 a R शूलात्रिवर्णमाकृत ।
cd R यो द्विर्जपति मिद्वाना पारग सुभगा भवेत् ।

9 d R विराचिता (for °जिता) After 10 R reads 12 cd

मयूर पद्मनाभेनालङ्कृतोऽस्ते नदेत्पुन ।
बीजसप्तकम शुचैर्महिमान्ता महोज्ज्वलाम् ॥ १०

प्रतिबीजाभिमन्त्रो ब्रह्मविष्णुशिवात्मक ।
अनन्तपुण्यनिलयो योगिनामपि दुर्लभ ॥ ११

कन्यानीत वर वस्तु वर्णव्यक्तिमुपागतम् ।
द्वात्रिंशत्यक्षरो मन्त्र सर्वेप्सितसमृद्धिद ॥ १२

यस्यानुष्ठानमात्रेण शक्र सुरपद गत ।
कुबेर धननाथत्व वह्निस्तेजस्वितामपि ॥ १३

आस्ते यमो नियमकृत् त्रिलोक्यालोकलोचित ।
निर्ऋतिर्नैर्ऋतिप्राप्यसाम्राज्यपदवामगात् ॥ १४

वारणाकृतसवासो वरुणस्तोयनाथताम् ।
ईशानोऽभूदथेशान्या तुषाराद्रिसुतापति ।
प्रभञ्जन प्रयन्ता भेजेऽखिलविभञ्जने ॥ १५

स्वपक्षमन्त्रसन्दृप्तो गरुड पक्षिनाथताम् ॥ १६

पालन कुरुते विष्णु प्रभविष्णु पदे पदे ।
रोचिष्णुता दिनमणि प्रपेदे गगनेऽधिकाम् ॥ १७

वाचस्पति समुदभूद्धिषणस्य विशेषत ।
सुधामधुरिमोद्गारानदधच्छीतदीधिति ॥ १८

रम्भा दम्भानप्सरसामहरद्रूपसम्पदा ।
गन्धर्वाणामधिपतिर्विश्वावसुरथाभवत् ॥ १९

शेषो विशेषप्रथिमा धरभार बभार ह ।
अपारविघ्नसहारधुरीणोऽभूद्गणाधिप ॥ २०

---

[11] R om 11 ab

[12] R om 12 ab and reads 12 cd after 10

[13] c R धनदामाप्द (for नाथत्वं)

[14] b R लोकार्चित (for लोचित)

[15] cd R ईशान्यामप्सरान्याम वभूविरेन्द्रपति ।
R om 15 c 16 b

[17] d R अगमद् (for प्रपेदे)

[20] c. R अनन्तविघ्न (for अपार°)

देवेन्द्रसेनापतिता स्थिरा भेजे षडाननः ।
त्रिलोकीमकरोद्वेधा ब्रह्माण्डान्यपि कानिचित् ॥ २१

रत्नाकरत्वमुदधिरवृणोद्रत्नसञ्चयै ।
अमन्दगन्धकुसुमो मन्दारो नन्दनेऽवसत् ॥ २२

हरण हरिणा नीता रुक्मिणीप्राणवल्लभा ।
प्रेष्ठा ज्येष्ठा गुणश्रेष्ठा बभूव रमणीगणे ॥ २३

महाविक्रमसम्पूर्णो भार्गव क्षात्रमण्डलम् ।
आचवर्त शरैरुग्रैरेकविंशतिसङ्ख्यया ॥ २४

शुक्र॰ प्रेष्ठत्कम काव्यमकरोद्भव्यदायकम् ।
ततो वव्रे कवीन्द्रत्व सुरासुरसमान्तरे ॥ २५

अचिन्त्यरूपचरितौ नासत्यौ सत्यसश्रयौ ।
समीयतु समगुणौ भिषग्वरवरेशताम् ॥ २६

प्रेष्ठव्रतो वशिष्ठोऽसौ विश्वामित्रपराक्रमम् ।
जग्रासाव्यग्रहृदयो हर्षयञ्शिष्यमण्डलम् ॥ २७

ब्रह्मर्षित्व प्रकर्षेण ब्रह्मर्षिषु समावृणोत् ।
विश्वामित्र पवित्रातिचरित्र साधुसम्मत॰ ॥ २८

गन्धर्वयक्षप्रवरकिन्नरैरभिशोभित ।
अवाप पर्वतेन्द्रत्व तुषाराद्रि स्फुरद्धिम॰ ॥ २९

मेरु सुवर्णप्राकारपरिखाशतभासुर॰ ।
समस्तदेववनितास्थानश्रियमसेवत ॥ ३०

---

21 cd R वेधास्त्रिलोकी निर्माण चक्रे समुदितोद्यम ।
-After 21 R ins
प्रभवन प्रवल्ता मेनेऽखिलविभञ्जने ।

22 R om 22 c 23 d

24 a R –सयुक्तो (for –सम्पूर्णो) –c R आवधान (for आचवर्त)

25 a R महाक्रम (for प्रेष्ठ॰) –cd R वव्रे कवीन्द्रपदवीं सुरासुरवन्दम्बक ।

27 a R प्रष्ठोनना[ प्रष्ठक्तु ]र्वसिष्ठोऽपि –cd R ग्रभस जनयन्हर्षं प्रकर्षं शिष्यमण्डले ।

29 d R समुज्ज्वल (for स्फुरद्धिम )

30 cd R समस्तदेवजनतास्थानता समनुग्रहीत् ।

पीठशक्तय एताः स्युरथावरणदेवताः ।
समासेन प्रवक्ष्यामि देवतां तुल्यरूपिणीम् ॥ ४१

महाकालरतां माद्यां महाप्रेतशिवोपरि ।
शिवाभिर्घोररावाभिः समन्ताद्दिक्षु वेष्टिताम् ॥ ४२

घोराट्टहासां मदिरापानव्याघूर्णलोचनाम् ।
स्मरन्पुष्पाञ्जलिं कुर्वन्नङ्गानि प्रयजेत्ततः ॥ ४३

पूर्वां दिशं समारभ्य षडस्रयन्त्रमध्यगे ।
काली कपालिनीं कुल्लां कुरुकुल्ला विरोधिनीम् ॥ ४४

विप्रचित्तामथ नवकोणेऽन्या नवरूपिणीः ।
उग्रामुग्रप्रभां दीप्तां नीलां पश्चाद्घनामपि ।
बलाकिकामथो मात्रां मुद्रां मितामपि क्रमात् ॥ ४५

सरोरुहाष्टपत्रेषु ललितेषु यथाक्रमम् ।
ब्राह्मीं नारायणीं माहेश्वरीं चामुण्डिकामपि ॥ ४६

कौमारीमपरां पश्चादर्चयेदपराजिताम् ।
वाराही नारसिंहीञ्च वसुसंख्या वसुप्रदाः ॥ ४७

